ISSN No. 2277-680X

# उशती

# UŚATĪ

## (The Journal of Sanskrit Studies)

नवदशाङ्कः ( Vol. XIX ) 2019 - वर्षम्

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥-ऋ.१०/७१/४




केन्द्रीयसंस्कृतविश्वविद्यालयः
गङ्गानाथझापरिसरः
चन्द्रशेखर-आजादोद्यानम्
प्रयागराजः
2020

ISSN No.: 2277–680X

# उशती

# UŚATĪ

## (THE JOURNAL OF SANSKRIT STUDIES)

**नवदशाङ्कः** (Vol. XIX) **2019 वर्षम्**

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥

ऋ० १०।७१।४

**सम्पादकाः**
ललितकुमारत्रिपाठी
अपराजिता मिश्रा
मोनाली दास




**केन्द्रीयसंस्कृतविश्वविद्यालयः**
गङ्गानाथझापरिसरः, प्रयागराजः
2020

# उशती

**पुनरीक्षणसमितिः**

**प्रो. वाचस्पतिशर्मा त्रिपाठी** (अध्यक्षचरः, धर्मशास्त्रविभागः)
कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः, दरभङ्गा

**प्रो. रमेशकुमारपाण्डेयः** (कुलपतिः)
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली

**प्रो. हरिदत्तशर्मा** (अध्यक्षचरः, संस्कृतविभागः)
इलाहाबादविश्वविद्यालयः, प्रयागराजः

**प्रो. विश्वम्भरनाथगिरिः** (अध्यक्षचरः, साहित्यविभागः)
केन्द्रीयसंस्कृतविश्वविद्यालयः, गङ्गानाथझापरिसरः, प्रयागराजः

**प्रो. सच्चिदानन्दमिश्रः** (दर्शनविभागः)
काशीहिन्दूविश्वविद्यालयः, वाराणसी

**प्रकाशकः**

**निदेशकः**,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
**गङ्गानाथझापरिसरः**,
चन्द्रशेखर-आजादोद्यानम्,
प्रयागराजः, उ. प्र. — २११ ००२

**प्रकाशनवर्षम्** २०२०

**अङ्कस्य शुल्कम्**

भारतीयम् ₹१५०
वैदेशिकम् $३५



**मुद्रकः**

इनफिनिटी इमेजिंग सिस्टम
मौजपुर, नव देहली -११० ०५३

ISSN No.: 2277–680X

# उशती
# UŚATĪ
## (THE JOURNAL OF SANSKRIT STUDIES)

**नवदशाङ्कः** (Vol. XIX) **2019 वर्षम्**

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥
ऋ० १०।७१।४

**Editors**
Lalit Kumar Tripathi
Aprajita Mishra
Monali Das




**Central Sanskrit University**
Ganganatha Jha Campus, Prayagraj
2020

# UŚATĪ



PUBLISHED BY

**Director**,
Central Sanskrit University,
**Ganganatha Jha Campus**,
Chandrasekhar Azad Park,
Prayagraj, U. P. — 211 002

YEAR 2020

INDIVIDUAL COPY

Indian ₹150
Foreign $35



PRINTED AT

Infinity Imaging System
Moujpur, New Delhi - 110 053

# सम्पादकीयम्

केन्द्रीयसंस्कृतविश्वविद्यालयस्य गङ्गानाथझापरिसरस्य 'उशती' इत्याख्याया वार्षिक्याः शोधपत्रिकाया नवदशाङ्को द्वादशानां शोधलेखानां समाहाररूपेण प्रकाश्यतां नीयते। अस्मिन् अङ्के संस्कृतविद्यामाश्रित्य विविधविषया गवेषणापूर्णा लेखाश्चकासति।

तत्र आचार्यकिशोरनाथझामहोदयेन "न्यायदृष्ट्या पदपदार्थयोः स्वरूपं सम्बन्धश्च" इति शीर्षकमाश्रित्य लिखितः शोधलेखः पदपदार्थविषये सूक्ष्मेक्षिकया विचारणां प्रस्तौति। अस्मिन्नालेखे प्राचीनमते विभक्त्यन्तस्यैव पदत्वं न्यायदर्शनेऽपि स्वीक्रियते स्म, परवर्तिभिर्नैयायिकैः शक्तं पदमिति सिद्धान्तः प्रस्तुत इति सप्रमाणं न्यरूपि। पुनश्चात्र लेखे न्यायमते संक्षेपेण स्फोटखण्डनचर्चाऽपि विहिता। अत्र लेखे पदार्थविषये जात्याकृतिव्यक्तयस्तु पदार्थ इति न्यायसिद्धान्तो मतभेदनिदर्शनपूर्वकं प्रस्तुतः। 'गामानय' इत्यादौ व्यक्तेः प्राधान्यम्, 'गोर्न पदा स्प्रष्टव्या' इत्यादौ जातेः प्राधान्यम्। 'रेखाभिर्गावः क्रियन्ताम्' इत्यादिषु आकृतेः प्राधान्यं निरूपितम्। पुनश्चात्र जात्याकृतिव्यक्तीनां युगपदेव एकयैव शक्त्या बोध उत वा एकस्य शक्त्या बोधः, अपरयोर्लक्षणया वेति विषयेऽपि विचारः कृतो दृश्यते। तत्र च प्राचीननव्यनैयायिकेषु मतभेदोऽपि दर्शितोऽस्ति। अत्राकृतिपदेन केषाञ्चिन्मते जातिव्यक्त्योः सम्बन्धोऽभीष्ट इत्यपि पक्षः समुपस्थापितः, न्यायसूत्रदृष्ट्या समीक्ष्य खण्डितश्चास्ति। भाट्टमीमांसकानां मतमप्यत्र प्रसङ्गादुद्धृतं वर्तते। अन्ते शक्तिलक्षणयोः संक्षिप्ता विचारणा कृता अस्ति।

"भारत पर आर्य-आक्रमण - एक सुनियोजित विदेशी षड्यन्त्र" इत्याख्ये प्रो. अभिराजराजेन्द्रमिश्रमहोदयेन लिखिते शोधपत्रे प्राचीनभारतीयसंस्कृतेः प्रभावः विश्वस्य विभिन्नासु संस्कृतिषु प्रदर्शितोऽस्ति। तथा हि सुमेरसंस्कृतौ महाप्रलयस्य या कथा उपलभ्यते सा कथा ऐतरेयब्राह्मणस्य मत्स्यपुराणस्य च प्रलयकथया साम्यं बिभर्ति। एतेन सुमेरसंस्कृतौ वैदिकवाङ्मयस्य प्रभावः सुस्पष्टमवलोक्यते। एवमेवान्येऽपि हेतवोऽत्र दर्शिता येन भारतीयसंस्कृतेः प्रभावो विश्वसंस्कृतौ साधयितुं शक्यते। अस्य लेखस्यानुसारं हित्ती-मितानी-असुर-संस्कृतयः पूर्णतो भारतीयाः सन्ति। सुमेर-बेबिलोन-मिस्र-संस्कृतयो भारतीयसंस्कृतेः प्रतिबिम्बभूताः संस्कृतयः वर्तन्ते। इत्थं च महाभारतकालिक्यः सर्वा अपि विश्वसंस्कृतयः प्रकृत्या भारतीया एवासन्। पुनश्च अस्मिन् लेखे एतत् प्रतिपादितं यद् आर्या एशियामाइनरतः (तुर्कीतः) समागता इति यन्मतं प्रतिपादितं वैदेशिकैः, तदपि न साधु। तथा स्वीकारे यासु यासु संस्कृतिषु भारतीयसंस्कृतेः प्रभावो दृश्यते ततस्ततः आर्याणामत्रागमनं वक्तव्यं भवेत्। अतो भारतादेव भारतीयाः तत्र तत्र गता इत्येव सिद्धान्तो वक्तव्यः,

न तु अन्यस्मात् स्थानात् आर्या अत्र आगता इति। वस्तुतस्तु आर्य इत्यभिधानमपि न जातिवाचकम्। अपितु सत्पुरुषाणां विशेषणमेतत्।

प्रो. राजारामशुक्लमहोदयेन लिखिते "आकाङ्क्षाज्ञानस्य व्यासस्थलीयाभेदान्वयबोधे कारणत्वविचारः" इत्याख्ये निबन्धे प्रथमं संक्षेपेण शब्दस्य पृथक् प्रामाण्यं प्रसाध्य वाक्यार्थः संसर्गः, स च अन्वयांश इति प्रतिपाद्य व्यासस्थले अभेदान्वयबोधाकाङ्क्षाज्ञानयोः कार्यकारणभावविषये सपरिष्कारं विचारः कृतोऽस्ति।

"अङ्कीययुगे हस्तलिखितानामभिगमः सूचिरचनं प्रतिमावाग्योजना परस्परसम्बद्धानां च सूचिप्रतिमासंस्करणान्वेषणतन्त्रांशानां जाले प्रदर्शनम्" (Accessing manuscripts in the digital age Hypertext presentation, cataloguing, and text-image alignment) इति प्रो. पीटर एम. श्रॉफमहोदयेन लिखिते आलेखे हस्तलिखितग्रन्थेषु विद्यमानानां पाठानामन्वेषणाय हस्तलेखसम्बद्धानां सूचनानां च अन्तर्जालमाध्यमेन समुपलब्धये अमेरिकादेशस्थसंस्कृतपुस्तकालयः (Sanskrit Library) इत्याख्यया संस्थया कृतस्य यत्नविशेषस्य विवरणं प्रदत्तमस्ति। हस्तलिखितग्रन्थेषु विद्यमानं ज्ञाननिधिं त्रातुं महत्त्वपूर्णोऽयमुपक्रमः। अत्र षड्विंशत्यां शीर्षकेषु गणकीयहस्तलेखसूचीनिर्माणम्, हस्तलेखानां गणकीयप्रतिमाकरणम्, गणकीयप्रतिमायाः सम्बद्धाभिरङ्कीयसंस्करणे विद्यमानाभिर्वाग्भिः संयोजनम्, सीतानामकस्य संस्कृतप्रतिमावाक्संयोजकतन्त्रांशस्य साहाय्येन तन्त्रांशस्य निर्माणम्, ततश्च तयोः परस्परं सम्बन्धनम्, गणकीयसूचीद्वारेण गणकीयसंस्करणद्वारेण वा हस्तलिखितपत्रस्थाया अभीष्टाया वाचोऽन्वेषणम् इत्येते विषयास्तत्सम्बद्धाः प्रविधयश्चात्र पत्रे निरूपिताः सन्ति।

"पाणिनीयव्याकरणं दर्शनशास्त्रञ्च" इति पत्रे आचार्यसच्चिदानन्दमिश्रमहोदयेन व्याकरणशास्त्रस्य अन्येषां च दर्शनानां परस्परं सम्बन्धः प्रभावश्च निरूपितोऽस्ति। अस्मिन् पत्रे व्याकरणशास्त्रस्य निर्माणपद्धतिः, व्याकरणस्य प्रक्रियांशः, व्याकरणदर्शनम्, परिष्कारश्चेति विषये संक्षिप्ता विचारणा कृता दृश्यते। अत्र शास्त्रनिर्माणपद्धतिविषये व्याकरणशास्त्रस्य अवदानमपि निरूपितं विद्यते। सामान्यविशेषवल्लक्षणविषये कश्चन महत्त्वपूर्णो विचारः कृतोऽस्ति। तथा च वैशेषिकपदार्थानां लक्षणेऽपि सामान्यविशेषवत्तया साम्यमपि निरूपितं विद्यते। व्याकरणशास्त्रस्य उपकारकता तावत् सर्वेषु शास्त्रेषु तत्तच्छब्दानामर्थनिरूपणप्रसङ्गे व्याकरणद्वारा व्युत्पत्तिकरणेनापि दर्शिता। अन्ते च लेखकेन व्याकरणदर्शनस्य कतिपयान् महत्त्वपूर्णान् सिद्धान्तान् उपस्थाप्य व्याकरणदर्शनस्य अन्येषु दर्शनेषु प्रभावं तस्य अवदानं च निरूप्य दर्शनान्तरस्यापि व्याकरणशास्त्रे प्रभावो दर्शितोऽस्ति।

प्रो. वसन्त म. भट्टमहोदयेन लिखितं "समीक्षित पाठ-सम्पादन के प्रचलित

सिद्धान्तों की प्रस्तुतता - एक परामर्श” इति पत्रं समीक्षात्मकस्य पाठसम्पादनस्य विषये विचारणां प्रस्तौति। भारतीयवाङ्मयस्य पञ्चधा विभाजनम् अत्र प्रदर्शितं वर्तते। पाठसम्पादनस्य कुत्र कीदृशो विधिरनुवर्तनीय इत्ययं विषयोऽत्र विचारितो वर्तते। तथाहि दृष्ट-उत्कीर्ण-प्रोक्त-कृत-श्रुत-भेदेन पञ्चधा प्राचीनं भारतीयं वाङ्मयं विभक्तम्। अत्र पाठसम्पादनस्यापि त्रिविधः प्रभेदो दर्शितः। तथा च प्रतिलेखनपद्धत्या पाठसम्पादनं, संदोहनपद्धत्या पाठसम्पादनं, वंशवृक्षपद्धत्या पाठसम्पादनं चेति। तत्र उत्कीर्णानाम् अभिलेखानां लेखस्य मूलप्रतिकृतेर्यद्वा प्राप्तस्य एकस्यैव हस्तलेखस्य आधारेण यत् सम्पादनं विधीयते तत् सम्पादनं प्रतिलेखनपद्धत्या कर्तुं शक्यते। अनेकेषु हस्तलेखेषु सत्स्वपि अनुलेखनीयसम्भावनादोषा यत्र स्युस्तत्र संदोहनपद्धत्या सम्पादनं युज्यते। वंशवृक्षपद्धत्या सम्पादनविधिः सर्वथा प्रसिद्धो बहुमान्यश्च वर्तते। अत्र अनुसन्धानं, संशोधनं, पाठशोधनपूर्वकं संस्करणम्, उच्चतरसमीक्षणम् इति भेदेन चत्वारि सोपानानि प्रकटितानि। अनेन विधिना विहितं सम्पादनं तावत् समीक्षितं पाठसम्पादनम् उच्यते। प्रोक्त-कृत-श्रुत-वाङ्मयानां यत्र अधिकाः पाण्डुलिपय उपलभ्यन्ते तत्र अनेन विधिना सम्पादनं योग्यं भवतीति अत्र सोदाहरणं विस्तरेण साधितमस्ति। पत्रमिदं भारतीयवाङ्मयस्य सन्दर्भे को विधिः समुपयुक्तो वर्तत इति विचारणादृष्ट्या वैशिष्ट्यं बिभर्ति।

प्रो. रामलखनपाण्डेयमहोदयेन लिखिते “वागर्थस्वरूपसम्बन्धविमर्शः” इत्याख्ये पत्रे व्याकरणदर्शनं काव्यशास्त्रञ्चाश्रित्य शब्दार्थयोः संस्कारविषये दार्शनिकी चर्चा विहिता वर्तते। अत्र पत्रे शब्दार्थसम्बन्धविचारसन्दर्भे व्याकरणदर्शनस्य वाग्ब्रह्मवादः काश्मीरशैवागमस्य पञ्चशक्तिमयस्य शिवस्य स्वरूपं तस्य पञ्चानां शक्तीनां स्वरूपं तत्र च चिच्छक्तेरेव वाग्रूपता इत्येते विषयाः संक्षेपेण निरूपिता वर्तन्ते। अस्मिन् पत्रे व्याकरणेन न केवलं शब्दस्य व्याकृतिः, अपितु अर्थस्यापि व्याकृतिः क्रियत इति विशेषेण प्रतिपादितं वर्तते।

प्रो. गङ्गाधरपण्डामहोदयेन लिखितः “पञ्च महायज्ञ” इत्याख्यो निबन्धो भारतीयपरम्परायां प्रसिद्धानां ब्रह्मयज्ञ-देवयज्ञ-भूतयज्ञ-पितृयज्ञ-मनुष्ययज्ञेति भेदेन पञ्चानां महायज्ञानां धर्मशास्त्रपुराणेतिहासादीनाम् आलोके विस्तरेण विवरणं प्रस्तुवन् अस्मिन् युगे एतेषां यज्ञानां समुपयोगितां प्रतिपादयति।

डॉ. अपराजिता मिश्रा महोदयया लिखिते “काव्यमीमांसा में कविशिक्षा” इत्याख्ये पत्रे सर्वप्रथमं कविशिक्षाविषयकस्य सिद्धान्तस्य प्रतिष्ठापको राजशेखरोऽस्तीति प्रतिपाद्य राजशेखरेण कृतं कविविवेचनम्, पाकभेदविवरणम्, काव्यानुहरणम्, कविचर्या, कविसमयश्चेति विषया विवेचिताः सन्ति। कविविवेचने राजशेखरेण प्रस्तुता प्रतिभाविचारणा तस्याश्च कारयित्री-भावयित्रीभेदेन द्वैविध्यनिरूपणं

ततश्च कवेः कारयित्र्याः प्रतिभायाः सहजा, आहार्या, औपदेशिकीति भेदेन त्रिधा भेदा दर्शिताः। अत्र राजशेखरेण कवेर्नैकविधिना कृताः प्रभेदाः दर्शिता सन्ति। कवीनां प्रतिभा-स्वोपज्ञता-विषयानुरूपता-मनोभावनानाम् अनुसारं कविभेदप्रतिपादनम् अत्यन्तं सूक्ष्मं विवेचनं वर्तते, अतोऽत्र राजशेखरस्य इदं वर्णनम् अपूर्वं प्रतिपादनम् इति स्थापितमस्ति। एवमेवात्र भावकस्य १) आरोचकी २) सतृणाभ्यवहारी ३) मत्सरी ४) तत्त्वाभिनिवेशी इति भेदेन चत्वारः प्रभेदा अपि अनुशीलिताः सन्ति। अत्रालेखे काव्यपाकस्य स्वरूपं तस्य त्रिषु गणेषु नव प्रभेदा वर्णिताः। पुनश्च काव्यानुहरण-कविचर्याविषयेऽपि विचारः कृतोऽस्ति।

डॉ. प्रीति शुक्ल तथा च डॉ. देवानन्दशुक्लमहोदयेन लिखितम् "Reflection of Upajāti metre in Śrimadbhagvadgītā" इति शोधपत्रं श्रीमद्भगवद्गीतायां प्रयुक्तेषु छन्दःसु विशेषेण उपजातिच्छन्दसो विविधान् भेदान् प्रदर्शयति। गीताया द्वितीये एकादशे चाध्याये उपजातेर्विविधा भेदा दृश्यन्ते। श्लोकस्य प्रत्येकं चरणे भिन्नस्य छन्दसः प्रयोगाद् एतादृशस्य विवरणस्य महत्त्वं वर्धते। अस्य लेखस्यानुसारम् उदाहरणद्वयं प्रस्तूयते -

आश्चर्यवत्पश्यतिकश्चिदेनं - **इन्द्रवज्रा (१)**
आश्चर्यवद्वदति तथैव चान्यः - **रति (२)**
आश्चर्यवच्चैनमन्यः शृणोति - **संश्रयश्री (३)**
श्रुत्वाप्येनं वेद न चैव कश्चित्॥ - **गुणांगी (४)**
रुद्रादित्या वसवो ये च साध्या - **वातोर्मी (१)**
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च - **ईहामृगी (२)**
गन्धर्वयक्षासुरसिद्धसङ्घा - **इन्द्रवज्रा (३)**
वीक्ष्यन्ते त्वां विस्मिताश्चैव सर्वे - **शालिनी (४)**

**श्लोक (११-२२)**

डॉ. मोनाली दास महोदयया लिखिते "Developing A Kāraka Tagging Scheme : Journey From Fine Grained To Coarse Grained Tagging", इत्यभिधे शोधलेखे सूचनाबन्धानां (tagging) विषये विचारणा कृताऽस्ति। संस्कृतस्य कृते यान्त्रिकभाषाविश्लेषणाय सूचनाबन्धानाम् (tagging) अपेक्षा भवति। आचार्यरामकृष्णमाचार्युलुद्वारा 2009तमे ईश्वीये वर्षे प्रस्तुतायां सूचनाबन्धयोजनायां विविधानां सम्बन्धानां निर्देशो विहितोऽस्ति। किञ्च तत्र दर्शितसूचनाबन्धानतिरिच्यापि अन्यसम्बन्धानां यथा क्रियाद्योतकस्य, उपमानद्योतकस्य, अनुयोगिप्रतियोगिसम्बन्धस्य, वाक्यकर्मणश्च कृते सूचनाबन्धा अपेक्ष्यन्ते। अस्मिन् पत्रे इमे सूचनाबन्धा अपि सोदाहरणं प्रस्तुताः सन्ति। अत्र पत्रे पूर्वोक्तसम्बन्धेषु

सूचनाबन्धानां परीक्षणार्थं तत्समृद्धये च राष्ट्रियसंस्कृतसंस्थानेन प्रकाशितः संक्षेप-रामायणम् इति ग्रन्थ आधारग्रन्थत्वेन स्वीकृतो वर्तते।

गोविन्दशुक्लेन लिखिते "मौनिश्रीकृष्णभट्टविरचितशब्दार्थतर्कामृतदृष्ट्या अनुमानप्रमाणविमर्शः" इति शोधलेखे मौनिश्रीकृष्णभट्टेन कृतम् अनुमानप्रमाणविषये तार्किकसिद्धान्तस्य खण्डनं प्रदर्शितमस्ति। तत्र अनुमितिनिष्ठाऽनुमितित्वजातिं खण्डयित्वा 'सङ्केतविशेषसम्बन्धेन परामर्शव्यापारकलिङ्गज्ञानजन्यवृत्ति अनु पश्चात् मिति' इति व्युत्पत्त्या योगरूढोऽनुमितिशब्दो व्यवस्थापितः। पुनश्च घटोऽभिधेयो प्रमेयत्वादिति केवलान्वय्यनुमाने अभिधेयत्वरूपसाध्यस्य निश्चयसत्त्वात् साध्यनिश्चयाऽभावाधिकरणत्वरूपपक्षताया अभावात् केवलान्वय्यनुमानस्य खण्डनं विहितम्। अग्रे 'घटो न जलम्' इत्यत्र यथा घटे जलभेदः प्रत्यक्षसिद्धस्तथैव 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्' इत्यादिषु व्यतिरेकानुमानेष्वपि इतरभेदस्य प्रत्यक्षसिद्धत्वात् केवलव्यतिरेक्यनुमानस्यापि खण्डनं दर्शितम्। अग्रे चन्दने यथा उपनीतभानात्मकाऽलौकिकसन्निकर्षेण सौरभत्वं सिद्धं तथैव पर्वतो वह्निमान् धूमादित्यादावपि अलौकिकसन्निकर्षेण वह्न्यादीनां सिद्धौ सर्वथा अनुमानप्रमाणस्य खण्डनं व्यधायि। अन्ते च हेत्वाभासस्याऽपि विविधयुक्त्या खण्डनं दर्शितम्। इत्थं च शोधलेखोऽयं मौनिश्रीकृष्णभट्टदृष्ट्या विविधतर्कैरनुमानस्य खण्डनं प्रस्तौति।

एतेषां शोधपत्राणां मूल्याङ्कनार्थं महत्त्वपूर्णं सारस्वतमवदानं कृतवद्भ्यो विद्वद्भ्यः कृतज्ञता आविष्क्रियन्ते। अत्र कर्मणि येषामपि साक्षात् परोक्षं वा साहाय्यमभूत् तेभ्यः सर्वेभ्योऽपि धन्यतावचांसि विज्ञाप्यन्ते॥ इति शम्॥

**सम्पादकाः**
**ललितकुमारत्रिपाठी**
**अपराजिता मिश्रा**
**मोनाली दास**

**सितम्बर 2020**

# विषयानुक्रमणी

# न्यायदृष्ट्या पदपदार्थयोः स्वरूपं सम्बन्धश्च

किशोरनाथ झा

किं पदं कश्च पदार्थः उभयोश्च कीदृशः सम्बन्ध इति जिज्ञासायां महर्षिणा गौतमेन प्रथमतः पदस्य लक्षणं विदधता 'ते विभक्त्यन्ताः पदम्'[1] इति सूत्रमभिहितम्। येषामन्ते विभक्तिर्भवति तथाविधाः वर्णसमूहाः पदसंज्ञां भजन्ति। विभक्तिश्च द्विधा स्वादिस्तिबादिश्च। बाह्मणः पचतीति यथाक्रममुभयप्रकारकयोः विभक्त्यन्तयोः वर्णसमुदाययोरुदाहरणे भवतः। उपसर्गनिपातयोरपि पदलक्षणेनानेन सङ्ग्रहे न जायते कापि बाधा। यतो हि तयोरव्ययतया तत्र स्वादिविभक्तेर्लोपात् तयोर्विभक्त्यन्तस्याक्षतेः। यद्यपि उपसर्गाणां सामान्यतः धातुभिरेव साकं योगो भवति। अत एवोक्तं न्यायमञ्जर्यां जयन्तभट्टेन -

**उपसर्गवशाद्धातुरर्थान्तरविलासकृत्।**
**प्रहाराहारसंहारविहारपरिहारवत्॥**[2]

'उपसर्गाः क्रियायोगे' इति व्याकरणानुशासनमपि तथैवाभिलपति तथापि कदाचित् नामभिरपि सार्धं योग उपसर्गस्य दृश्यते। यथा प्रगतं वयो यस्य सः प्रवया इति। यद्यपि क्वचिदुपसर्गः धात्वर्थमेव बाधमानो दृश्यते गतिनिवृत्तिवाची स्थाधातुः प्र उपसर्गयोगेन प्रकर्षगतिवाचकतां बिभर्ति। न चेदृश्यर्थनाशकता विशेषणस्य शोभते। विशेषणं तु विशेष्यस्यार्थाविरोधेन तत्र विशेषमुपजनयतीति दृष्टम्। नैयायिकोऽत्रैवं समस्यामिमां समादधाति। अर्थान्तराभिधानसामर्थ्यापादनमेव हि धातोर्विदधत् उपसर्गः विशेषणं भवति। अनेकार्थाभिधानशक्तिश्च धातुरुपसर्गेण नियतेऽर्थेऽवस्थाप्यते इति तस्य तद्विशेषणता। धातूनामनेकार्थता तु समेषां वादिनामविप्रतिपन्नेति विदितमेव धीधनेषु।

उपसर्गाणां द्योतकत्वं वाचकत्वं वेति प्राचीननैयायिकः नैवाचिन्तयत् किन्तु प्रयोगप्रतिपत्तिभ्यां तदर्थमवाधारयत्। तस्मादुपसर्गनिपातकर्मप्रवचनीयानां प्रयोगप्रतिपत्तिभ्यामेवार्थोऽवधारणीय इति प्राचां नैयायिकानामाशयं न्यायमञ्जर्यां जयन्तभट्टः प्राकाशयत्। न्यायसूत्रकृत उपर्युक्तं पदलक्षणं सर्वत्र पदेषु नामाख्यातोपसर्गनिपातात्मकेषु समन्वेति इति सर्वं समञ्जसम्।

यद्यपि 'सुप्तिङन्तं पदम्[3] इति पाणिनीयसूत्रानुशासनात् वैयाकरणानामपि पदस्वरूपमधिकृत्य मतमेतदेव। तथाप्येषां मते पदस्य वाचकत्वं न भवति किन्तु पदस्फोटमेते वाचकं मन्वते इति विशेषः। तात्पर्यटीकायां वाचस्पतिमिश्रस्तु वैश-

[1]न्या.सू. २/२/६०

[2]न्या.म.पञ्च. पृ.२९९

[3]अष्टा. १/१/१४

द्येन स्फोटं निराकुर्वन् वर्णसमुदायात्मकं विभक्त्यन्तं पदमेव वाचकं निगदति। तथा हि तत्पङ्क्ती इह समुद्ध्रियेते ये परिपोषके भवत उपर्युक्तायाः कथायाः। 'त एव वर्णाः एव विभक्त्यन्ताः सन्तः पदं न तु तदतिरिक्तं स्फोटाख्यम्' इत्येका पङ्क्तिः। 'तस्माद् दृष्टेभ्य एव वर्णेभ्यः दृष्टप्रकारानुपातिभ्योऽर्थ प्रत्ययोत्पत्तिरूपे पद्यमाना नादृष्टं स्फोटात्मानं दृश्यभेदापह्नवेन कल्पयितुमर्हतीति सिद्धं 'ते विभक्त्यन्ता पदमिति' अपरा पङ्क्तिः।[4] न केवलं वाचस्पतिमिश्रस्तात्पर्यटीकायामपितु तस्मादपि प्राचीनः जयन्तभट्टः न्यायमञ्जर्यां षष्ठाह्निके सविस्तरं युक्त्या निराकरोति स्फोटवादम्। तथा हि वर्णानामर्थप्रत्यायकत्वं कथम्? किं वर्णा गकारादयोऽर्थं प्रतिपादयन्तः समस्ताः प्रतिपादयेयुर्व्यस्ता वा?

न तावद् व्यस्ताः। एकैकवर्णाकर्णने सत्यप्यर्थप्रतीतेरनुत्पादात्। सामस्त्यं क्रमभाविनामाशुविनाशशालिनां वर्णानां नास्त्येव। सिद्धसत्तामात्रेण वा स्यात् प्रतीयमानत्वेन वा? नैयायिकपक्षे तावत् सत्तया यौगपद्यमविद्यमानम् आशुविनाशिनः शब्दस्य दर्शितत्वात्। किञ्च प्रतीतिसामस्त्यं किमेकवक्तृप्रयुक्तानां वर्णानामाहोस्वित् नानावक्तृभाषितानाम् इति विकल्प उदेति। अनेकपुरुषभाषितानां कोलाहलस्वभावत्वेन स्वरूपभेद एव दुरवगम इति कस्य सामस्त्यमसामस्त्यं वा चिन्त्येत।

एकवक्तृप्रयुक्तानां तु प्रयत्नस्थानकरणक्रमापरित्यागादवश्यम्भावी क्रमः। क्रमे च सत्येकैकवर्णकरणिकार्थप्रतीतिः प्राप्नोति न चासौ दृश्यते। इति व्यस्तसमस्तविकल्पानुपपत्त्या वर्णाः वाचकाः। अस्याः समस्यायाः समाधानमेवं ब्रवीति जयन्तभट्टः।

'व्यस्तानां तावद्वाचकत्वं नेष्यते वर्णानां समस्ता एव ते वाचकाः। क्रमभाविनामपि समस्तानां कार्यकारिणामनेकशो दर्शनात्। क्रमभाविनोऽपि समस्ताः ग्रासाः एकां तृप्तिमुत्पादयन्तो दृश्यन्ते। एकस्मिन्नपि हि ग्रासे हीयमाने न भवति तादृशी तृप्तिः। अतः समस्ता एव ते ग्रासाः तृप्तेः कारणम्। न च समस्ता अपि ते ग्रासाः युगपत् प्रयोक्तुं शक्याः।' एवं वदतोऽप्यत्रोदाहरणं प्रस्तुतं विस्तरभयान्नोल्लिख्यते। स्फोटवादमधिकृत्य इयमेव स्थितिः भट्टकुमारिलस्य श्लोकवार्त्तिके पार्थसारथिमिश्रस्य शास्त्रदीपिकायां सांख्यसूत्रस्य पञ्चमेऽध्याये समवलोक्यते इत्यवधेयं धीधनैः।

नव्यनैयायिकस्तु प्राचीननैयायिकाद्भिन्नं मतमिह पुष्णाति। नास्य मते विभक्त्यन्तः वर्णसमुदायः पदं भवत्यपितु येन वर्णसमूहेन वृत्त्यार्थात् शक्तिलक्षणान्यतरयार्थबोधो भवति स वर्णसमूह एव पदसंज्ञां बिभर्ति। अत एव प्रकृतेरर्थाद् धातुप्रातिपदिकयोरथ च सार्थकस्य प्रत्ययस्यार्थाद् विभक्तेरपि पदत्वेन व्यवहारो

[4]न्या.सू. २/२/६०

भवितुमर्हति। अन्यथैकपदार्थस्यापरपदार्थेन सहान्वयबोधनियमेन प्रकृतिप्रत्ययार्थयोरन्वयबोध एव न स्यात्। 'ईश्वरसङ्केतः शक्तिस्तया चार्थबोधकं पदं वाचकम्। यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थः गवादिर्वाच्य' इति शक्तिवादस्यारम्भिकी पंक्तिरमुमभिप्रायं सुस्पष्टं बोधयति।

उपर्युक्तस्य पदलक्षणसूत्रस्य वृत्तौ विश्वनाथपञ्चाननोऽपि नव्यमतं समर्थयन्नभिदधाति – 'अथवा विभक्तिर्वृत्तिरन्तःसंबन्धस्तेन वृत्तिमत्त्वं पदत्व'मिति। न्यायतत्त्वालोके द्वितीयवाचस्पतिमिश्रोऽपि निगदति – 'शक्तत्वं पदत्वम्। शक्तत्वञ्च वाचकत्वम्' इति। तस्मादेतौ वृत्तिकृतौ स्फोटपदार्थं नैव मत्वा शक्तिविशिष्टं वर्णसमुदायमेव वाचकं मन्वाते इत्यवगम्यते। यद्यपि सूत्रकृदुक्तं पदलक्षणं विभक्त्यन्तं वर्णसमुदायः, नैतौ पदमङ्गीकुरुतस्तथापि द्वितीयवाचस्पतिमिश्रः सूत्रस्य वृत्तिं प्रणेतुं प्रवृत्तः सूत्राक्षरार्थमेव कथमपलपेदिति विचिन्त्य स्वकीयायाः वृत्तेर्न्यूनतां परिहर्तुकामः प्राच्यनव्यनैयायिकयोः मतयोः समन्वयं विधातुं प्रयत्नशीलश्च कथयत्यत्र- 'ते विभक्त्यन्ताः पदम्' इति तु शक्तिग्रहोपजीव्यत्वादुक्तमिति। न्यायलोचनकृतः कृतिर्नाम वा नोपलभ्यते यद्यपि तथापि तन्मतं पश्चाद्वर्तिभिः नव्यनैयायिकैः समुद्धृतं यत्र कुत्रापि संदृश्यतेऽस्माभिः। प्रस्तुतप्रसंगे न्यायतत्त्वालोके द्वितीयवाचस्पतिमिश्रस्तन्मतमेवं समुद्धरति – 'येन रूपेण यत्रार्थे यस्य शब्दस्यासाधारणी व्युत्पत्तिः कृता तादृगसाधारणव्युत्पत्तिविषयकत्वमेव पदत्वम्। व्युत्पत्तिस्तु क्वचित् संकेतः क्वचित् शक्यसंबन्धः इति। तस्माद्वयं पश्यामो यन्नव्यनैयायिकाः अनुभवबलमासाद्य स्वतन्त्रं चिन्तयन्तः मतं स्थापयन्ति। सूत्रकारस्यापि सम्बलमनुभव एव किन्तु उभयोरनुभवयोः स्फुटं पार्थक्यमिह विद्यते। प्राचीननैयायिकेषु अन्यतमः प्रौढचिन्तकः जयन्तभट्टः 'इत्येवं सूत्रकारागममनुसरतानुज्झता भाष्यभूमि'मिति न्यायमञ्जरीग्रन्थोपसंहारे प्रतिजानानः स्पष्टमभिलपति तत्र पञ्चमाह्निके – 'न जातिः पदस्यार्थो भवितुमर्हति पदं हि विभक्त्यन्तो वर्णसमुदायः, न तु प्रातिपदिकमात्रम्' इति।

इदानीं पदार्थस्वरूपनिरूपणावसरेऽपि प्राच्यनव्ययोर्मतभेदोऽस्माभिराकलनीयः। पदस्य वाच्योऽर्थः पदार्थो भवति। तत्स्वरूपं निरूपयन् न्यायसूत्रकृदाह – जात्याकृतिव्यक्तयस्तु पदार्थः'[5] इति। तु शब्दोऽत्र विशेषणार्थः। जात्याकृतिव्यक्तिषु प्रधानाङ्गभावस्यानियमं बोधयति। यदा भेदविवक्षा विशेषबोधश्चापेक्ष्यते तदा व्यक्तेः प्राधान्यमङ्गभावश्च जात्याकृत्योः। यदा तु न भेदे विवक्षा सामान्यबोधश्चापेक्ष्यते तदा जातिः प्रधाना व्यक्त्याकृती चाप्रधाने भवतः। जातिव्यक्त्योः प्रधानाङ्गभावः बहुत्र प्रयोगेषूपलभ्यते। किन्तु आकृतेः प्राधान्यमुत्प्रेक्षणीयमर्थादन्वेषणीयमिति भाष्यकारोऽभिदधाति। यथा गामानय, गां मुञ्च, गां बधान, गवां षड् देया

[5] न्या.सू. २/२/६६

द्वादशदेया चतुर्विंशतिर्देया इत्यादि व्यवहारा व्यक्तिमाधृत्यैव भवितुमर्हन्ति। जातौ षडादिसंख्यानामानयनादिक्रियाणाञ्चान्वयस्यासंभवात्। किञ्च वेदवाक्येभ्यः पशो-रालम्भनविशसनप्रोक्षणादिक्रियाः विधीयन्ते ताश्च व्यक्तिष्वेव संभवन्ति न जाताविति सर्वानुभवानुमतम्।

भेदाविवक्षायां जातेः सामान्यबोधो भवति। यथा 'गौर्न पदा स्प्रष्टव्या इति। अत्र सर्वगवीषु पादस्पर्शप्रतिषेधो गम्यते। अत एव जातेः प्राधान्यमङ्गभावश्च व्य-क्त्याकृत्योः। पिष्टकमय्यो गावः क्रियन्ताम्। रेखाभिः गावः क्रियन्तामित्यादिस्थ-लेषु आकृतेः प्राधान्यम् जातिव्यक्त्योरङ्गभावः। ईदृशश्च प्रयोगः सन्निवेशचिकीर्षयैव क्रियते। अत एव न सा व्यक्तिर्न च तत्र जातेर्वृत्तिता। तस्मात् सुष्ठूक्तं जात्याकृति-व्यक्तयस्तु पदार्थ इति। तात्पर्यटीकायां वाचस्पतिमिश्रोऽत्र स्फुटमभिलपति- 'गो-शब्दोच्चारणानन्तरं यस्यैतत् पदशक्तिज्ञानं विद्यते तस्य युगपदेव गोव्यक्तेः गोत्व-जाते गवाकृतेश्चैक एव शाब्दबोधो भवति। व्यक्त्याकृतिजातिषु कस्याश्चिदेकस्याः शक्त्यापरयोर्लक्षणया तु न जायते बोधः। तस्मात् समस्तासु जात्याकृतिव्यक्तिषु शक्तिर्न व्यस्तासु तासु।

नव्यनैयायिकः जगदीशतर्कालङ्कारः शब्दशक्तिप्रकाशिकायां प्राचीननैयायि-कैः साकं स्वयं मतैक्यं बिभर्ति, किन्तु नव्यसम्प्रदायविदां मतमुल्लिखन्नसौ कथयति – 'गोत्वजातौ गोव्यक्तौ चैका शक्तिः, आकृतौ गोः या शक्तिः सा भिन्नेति। फलतः गोत्वजातिविशिष्टायां गोव्यक्तौ गोशब्दस्यैका शक्तिः गोराकृतौ चापरा शक्तिरिति गोशब्दस्य शक्तिद्वयम्। यत्र गोराकृतौ गोशब्दस्य शक्तिज्ञानं नास्ति तत्र तदाकृतेः शाब्दबोधो न भवति। अतः गोत्वविशिष्टायाः गोव्यक्तेः केवलं शाब्दबोधो जायते। गदाधरभट्टाचार्यः मन्ये मतमिदं किञ्चित्परिष्कृत्य स्वीकरोति। अत एव कथयति- 'यत्र केवलाकृतिविशिष्टे गवादिपदतात्पर्यं यथा पिष्टकमय्यो गाव इत्यादौ शुद्धगो-त्वाद्यवच्छिन्नपरत्वे स्वादिपद इव लक्षणैवेति।' विश्वनाथन्यायपञ्चाननः द्वितीयवा-चस्पतिमिश्रश्च स्वकृत्योः न्यायसूत्रवृत्त्योः प्राचीनानां मतमेव समर्थयतः। गदाधर-भट्टाचार्योऽपि शक्तिवादस्य परिशिष्टभागे जात्याकृतिविशिष्टायां गोव्यक्तौ गोशब्द-स्यैकां शक्तिमभ्युपगच्छति। स्वमतं न्यायसूत्रं पदार्थस्वरूपनिरूपकमुद्धृत्य समुपोद्व-लत्यपि। किन्तु यथा जगदीशतर्कालंकारः प्राचीनमतमिहानुगच्छति तथा सर्वांशतो नाभ्युपगच्छति तत् गदाधरभट्टाचार्यः। जगदीशतर्कालङ्कारदृष्ट्या गोशब्दस्य श-क्तेरवच्छेदिका जातिरिवाकृतिरपि भवति, किन्तु गदाधरभट्टाचार्यदृष्ट्या तादृश्याः शक्तेरवच्छेदकता केवलं जातौ विद्यते नाकृतौ। जातिः साक्षात् संबन्धेन व्यक्तौ स-न्तिष्ठते आकृतिस्तु अवयवसंयोगविशेषः साक्षात् संबन्धेन व्यक्तौ न विद्यते, किन्तु सामानाधिकरण्येन। तथा चात्र गदाधरभट्टाचार्यस्य पङ्क्तिः – 'गवादिशब्दात् सं-

स्थानरूपाकृतेरपि बोधस्यानुभाविकतया गोत्वादिजातिवत् सापि (आकृतिरपि) तद् वाच्ये विशेषणम्, तस्याश्च वाच्यविशेषणत्वेऽपि न प्रवृत्तिनिमित्तता। साक्षात्संबन्धेन वाच्यवृत्तित्वाभावात्। अवयवसंयोगरूपायास्तस्याः सामानाधिकरण्येनैव गवादौ सत्त्वात्।' एवमपरापि पङ्क्तिः – 'जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यम्। जात्याकृतिव्यक्तयस्तु पदार्थ इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थ इत्येकवचनान्तं निर्दिष्टवतो महर्षेरप्यनुगतम्' इति। अत्र प्रथमोद्धरणेन सह नव्यसंप्रदायविदां मतस्य परिपोषोऽवलोक्यते।

नव्यनैयायिकेषु मूर्धन्यः रघुनाथशिरोमणिः गोत्वविशिष्टायां गवि गोशब्दस्य शक्तिं गोत्वविशिष्टस्य गोः शाब्दबोधं गोत्वं च शक्यतावच्छेदकं मन्वानोऽपि गोत्वजातौ गोपदस्य शक्तिं नाङ्गीकरोति। मतमिदं गुणटिप्पण्यां प्रत्यक्षचिन्तामणौ चोपलभ्यते। आकृतौ त्वयं लक्षणां मन्यते। अत एव पदार्थनिरूपणेऽभिहितम् 'पिष्टकमय्यो गावः इत्यादौ तु गवाकृतिसदृशाकृतौ लक्षणा। पिष्टकसंयोगस्याशक्यत्वात्।

न्यायरहस्यकृत् आकृतिपदेन जातिव्यक्त्योः संबन्धं समवायं मनुते, न तु अवयवसंयोगविशेषसूत्रकृदुक्तम्। अस्येयं युक्तिः गोशब्देन यदा समवायसंबन्धेन गोत्वजातिविशिष्टाया गोव्यक्तेर्बोधो भवति तदा समवायसंबन्धोऽपि गोशब्दस्य वाच्यो भवत्येव। तत्रापि तत्पदस्य शक्तिः कर्तव्यैव। अन्यथार्थात् अस्य संबन्धस्य पदार्थेऽनुल्लेखेन सूत्रकारस्य न्यूनता स्यात्। अतः सूत्रकृत् संबन्धमिमं स्वीकरोत्याकृतिपदेन। यदि गोत्वजातिविशिष्टाया आकृतिविशिष्टायाश्च गोव्यक्तेर्बोधः कस्यचिद्भवति तदा तत्र शक्तिभ्रमः लक्षणावाभ्युपगन्तव्येति तदुक्तिः।

किन्तु सूत्रकारस्य नैतदनुमतम्। यतोहि आकृतेः स्वरूपं निरूपयन्नसौ अवयवसंस्थानविशेषमेव कथयति, न तु जातिव्यक्त्योः संबन्धम्। आकृतिर्जातिलिङ्गाख्या[6] इति सूत्रमाकृतिस्वरूपं निरूपयति। यया जातिर्जातिलिङ्गानि चाख्यायन्ते तामाकृतिं विद्यात्। नियतावयवव्यूहाः खलु सत्त्वावयवाः जातिलिङ्गं नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते इति हि भाष्यमत्रत्यम्। जातिव्यक्त्योः संबन्धस्तु संसर्गमर्यादयापि भासत एव। तदर्थं सूत्रगतस्याकृतिपदस्य क्लिष्टकल्पनया व्याख्यानं नापेक्ष्यते। सर्वैरेव नैयायिकैस्तादृशस्य संबन्धस्य तथा तद्भानस्य च स्वीकृतत्वात्।

मीमांसकस्तु आकृतिपदेन जातिं मन्यते। यया व्यक्तिराक्रियते इति हि तद्व्युत्पत्तिः। नायमाकृतितो भिन्नां जातिं स्वीकरोति। कुमारिलभट्टः श्लोकवार्तिके कथयति -

[6] न्या.सू. २/२/६८

**जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया।**
**सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥**[7]

नैतद् रोचते नैयायिकेभ्यः। नैयायिकानुमते आकृतिस्वरूपे लोकोक्तिरपि संगच्छते – 'यत्राकृतिस्तत्र गुणाः वसन्ति' इति न्यायमञ्जर्यां जयन्तभट्टः कथयति। न्यायानुमता जातिस्तु सा या समानां बुद्धिं- प्रसूतेऽर्थादुत्पादयति। तथा च जातिस्वरूपनिरूपकं न्यायसूत्रम् – 'समानप्रसवात्मिका जातिः'[8] इति व्यक्तिस्तु व्यज्यते इति व्युत्पत्त्योपपद्यते। यो हि रूपरसगन्धस्पर्शगुरुत्वघनत्वद्रवत्वसंस्काराव्यापकपरिमाणानामाश्रयः स व्यक्तिपदवाच्यो भवति। एवंविधस्य द्रव्यस्यावयवसमूहः मूर्छितोऽर्थात् परस्परं संयुक्तो भवति। अत एव मूर्तिपदवाच्यतामपि याति व्यक्तिः। 'व्यक्तिर्गुणविशेषाश्रयो मूर्तिरिति न्यायसूत्रमेतदेवाभिप्रैति।

निर्धार्यमाणे पदपदार्थयोः स्वरूपे तयोः संबन्धजिज्ञासायां शक्तिर्लक्षणा च नैयायिकैरङ्गीक्रियते। तथा च शक्तिवादारम्भ एव गदाधरभट्टाचार्यः - 'संकेतो लक्षणा चार्थे पदवृत्ति'रिति। घटपदेन घटरूपस्यार्थस्य बोधः संकेतेनार्थात् शक्त्या जायते। गंगायां घोष इत्यत्र जलप्रवाहरूपे गङ्गापदार्थे गोपनिवासस्य घोषस्यासंभवेन गङ्गा पदस्य गङ्गातटोऽर्थः लक्षणया निर्धार्यते। शक्यसंबन्धो हि लक्षणा। शक्येन जलप्रवाहरूपेण सह तीरस्य संबन्धात् शक्यसंबन्धरूपा लक्षणा तत्र कार्यं सम्पादयति। यत्रान्वयस्यानुपपत्तिर्भवति तत्र लक्षणाभ्युपगम्यते इति हि नैयायिकस्याशयः।

एवं पदस्य पदार्थस्य उभयोश्च संबन्धस्य स्वरूपपरिचयः न्यायदृष्ट्येह यथामति प्रस्तुतः। शास्त्रान्तरविचारसंक्रान्त्या समागतायाः जटिलतायाश्च परित्यागो विहित इति ध्येयम्।

**शब्दसंक्षेपः**

१. अष्टा. - अष्टाध्यायी
२. न्या.म.पञ्च. - न्यायमञ्जरी पञ्चममाह्निकम्
३. न्या.सू. - न्यायसूत्र
४. श्लो.वा.आ. - श्लोकवार्त्तिक आकृतिवाद

[7] श्लो.वा.आ. पृ.३८५
[8] न्या.सू. २/२/६९

**सन्दर्भग्रन्थसूची**

१. पाणिनिविरचिता अष्टाध्यायी, परिष्कर्ता श्रीगोपालदत्तशास्त्री, सम्पादकः श्रीगोपालदत्तपाण्डेयः, चौखम्बा सुरभारती प्रकाशन ग्रन्थमाला - १९, २०१७
२. न्यायमञ्जरी, न्यायव्याकरणाचार्यसूर्यनारायणशर्मशुक्ल, चौखम्बा संस्कृत सीरिज़ आफिस, बनारस, १९३६
३. न्यायसूत्र, अनुवादक प्रो. राजाराम, बाम्बे मशीन प्रेस, लाहौर, १९२१
४. श्लोकवार्तिक, सम्पा. स्वामी द्वारिकादासशास्त्री, तारा पब्लिकेशन, वाराणसी, १९७८



# आकांक्षाज्ञानस्य व्यासस्थलीयाभेदान्वयबोधे कारणत्वविचारः

राजारामशुक्लः

परोक्षापरोक्षभेदेन प्रमेयद्वैविध्यात् तद्ग्राहकप्रमाणानां द्वैविध्यं सर्वजनसिद्धम्। लोके यावन्तो हि पदार्थास्ते सर्वेऽपि येन केनचित् प्रमाणेन ज्ञेया भवन्ति, अज्ञेयस्य वस्तुत्वमेव न सम्भवति। ये च ज्ञेयास्ते सर्वेऽपि प्रमेया (प्रमात्मकज्ञानविषयाः) अपि सन्ति। यस्य वस्तुनः प्रमात्मकं ज्ञानं न सम्भवति तस्य ज्ञानमपि न सम्भवति। अतो वस्तुमात्रं ज्ञेयं प्रमेयञ्च। इदमप्यवधातव्यं यत् यद्यत् ज्ञायते तत्सर्वमभिधातुं शक्यते। सर्वस्यापि वाचकः कश्चन शब्दोऽवश्यमस्त्येव, तस्मात् यत्प्रमेयं तदभिधेयमप्यस्ति। किञ्चिद्वस्तु प्रमितं भवति। किञ्चित्तु अप्रमितमपि प्रमेयं भवति। प्रमितता अन्या प्रमेयता चान्या। प्रमितता हि प्रमितिविषयता, सा च प्रमाणव्यापारोत्तरमागच्छति। यथा घटेनेन्द्रियसन्निकर्षे जाते घटः प्रमितो भवति। प्रमेयत्वं पुनः प्रमितिविषयतावच्छेदकधर्मवत्त्वम्। तच्च प्रमाणव्यापारात् प्रागपि सम्भवति। यस्मिन् घटविशेषे प्रमाणव्यापारो न जातः तत्र प्रमितत्वस्याभावेऽपि प्रमितिविषयत्वयोग्यत्वरूपं प्रमेयत्वमस्त्येव। अयमेव भेदो ज्ञातज्ञेययोः, अभिहिताऽभिधेययोश्च बोध्यः।

प्रमेयेषु कानिचित् अपरोक्षाणि इतराणि परोक्षाणि। इन्द्रियैः ग्राह्याः पदार्था अपरोक्षाः, तदग्राह्याश्च परोक्षा इत्युच्यन्ते। परोक्षाणां पदार्थानां ग्रहणमिन्द्रियेतरप्रमाणैरेव भवितुमर्हति तत्र इन्द्रियव्यापारो न प्रभवति, किन्तु अपरोक्षाणां पदार्थानां विषये नैषा स्थितिः, तत्र इन्द्रियाणामिव तदितरप्रमाणानापि प्रसरोऽस्ति। इदन्तु सत्यं यत् इन्द्रियेण गृहीते पदार्थे प्रमाणान्तरप्रसरो नास्ति, अनावश्यकत्वात्। इच्छायां सत्यान्तु भवत्येवेत्यन्यदेतत्। अपरोक्षेषु पदार्थेषु द्वैविध्यं दृश्यते -

1. इन्द्रियेण गृहीतः
2. इन्द्रियेणागृहीतोऽपि ग्रहीतुं शक्यः।

आद्यो यथा स्फीतालोकमध्यवर्ती चक्षुःसन्निकृष्टो घटः। द्वितीयस्तु पर्वतस्थो वह्निः, स हि चक्षुषा ग्रहीतुं शक्योऽपि तदानीमिन्द्रियसन्निकर्षाभावान्न गृह्यते। स्वभावतः इन्द्रियवेद्योऽपि सः दशाविशेषे प्रत्यक्षो न भवति। अतस्तत्र परोक्षग्राहकप्रमाणानां प्रसरो भवति। केचन स्वाभावत एवातीन्द्रियाः भवन्ति, यथा— गुरुत्वादृष्टभावनादयः। तत्रेन्द्रियव्यापारस्य कथमपि प्रसक्तेरभावात् परोक्षप्रमाणमात्रग्राह्या भवन्ति ते। अतः अपरोक्षापेक्षया परोक्षप्रमाणानां क्षेत्रमधिकमस्ति।

परोक्षप्रमाणेषु अनुमानशब्दयोर्विषये अधिका चर्चा समुपलभ्यते शास्त्रेषु।

यद्यपि शब्दस्य पृथक्प्रामाण्यविषये विवदन्ते शास्त्रकाराः, केचन तमनुमानेऽन्तर्भावयितुमिच्छन्ति, अपरे च तस्य पृथक् प्रामाण्यं व्यवस्थापयन्ति। परन्तु सर्वानुभवसिद्धे तस्य प्रामाण्ये न कोऽपि सन्दिहानोऽस्ति। शब्दस्यानुमानान्तर्भावो नाम न हि तस्य व्याप्तिज्ञानादिरूपत्वमपितु व्याप्तिज्ञानविधया प्रमितिजनकत्वम्। शब्देन जनितं ज्ञानं न प्रमान्तरमपित्वनुमितिरूपमेवेति निष्कर्षः। अतएव तस्य पृथक्प्रामाण्यं व्यवस्थापयितुमुद्यतैः वस्तुतस्तज्जन्यज्ञानस्यानुमित्यादिविलक्षणत्वमेव संसाध्यते। तथाहि -

**साकांक्षशब्दैर्योबोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा॥**[1]

कस्यापि ज्ञानस्य जातिः (प्रत्यक्षत्वम्, अनुमितित्वम् इत्यादिः) तदुत्तरं जायमानेन अनुव्यवसायेन निर्धार्यते। घटशब्दश्रवणेन जायमानबोधोत्तरं यदि घटम् अनुमिनोमीत्येवानुव्यवसायस्तर्हि भवेत् शब्दजज्ञानस्यानुमितिरूपत्वम्। परन्तु तन्न लोकानुभवसिद्धम्, प्रत्युत शाब्दयामीत्येव। अतो न तदनुमितिरूपम्। अन्याश्चापि बह्व्यः युक्तयः सन्तिः यदाधारेण पृथक्प्रामाण्यवादिनः शब्दजज्ञानस्य अतिरिक्तप्रमितित्वं व्यवस्थापयन्ति। विस्तरभयात् प्रकृतानुपयोगित्वाच्च नेह वितन्यते।

उच्चरितस्य कस्यापि वाक्यस्य घटकानि प्रत्येकं पदानि शक्तिज्ञानवतः पुरुषस्य स्वस्वार्थानुपस्थापयन्ति। तदुत्तरं तेषां पदार्थानां मिथोऽवयवबोधरूपा प्रमितिर्जायते, सैव शाब्दबोध इत्युच्यते। तत्रान्वयांश एव अधिकतया भासते इति स एव वाक्यार्थः। संसर्गांशस्य पदोपस्थाप्यत्वाभावेनाकाङ्क्षाभास्यत्वं स्वीकृतं नैयायिकैः - `शाब्दबोधे चैकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते'[2]। स च संसर्गो द्विविधोऽनुभूयते अभेदः भेदश्च स्वस्वामिभावादिः[3]। द्विविधबोधमधिकृत्य व्युत्पत्तिवादे गदाधरभट्टाचार्यैर्महान् विचारः कृतः। तत्र तैः अभेदान्वयबोधस्य उदाहरणद्वयं प्रदर्शितम्- समासस्थले नीलघटमानयेत्यादिः, व्यासस्थले च नीलो घट इत्यादिः।

प्रस्तुतनिबन्धे 'नीलो घटः' इत्यादिव्यासस्थलीयाभेदान्वयबोधाकाङ्क्षाज्ञानयोः कार्यकारणभावमाश्रित्य किञ्चिद्विविच्यते। तथाहि तत्रायं सन्दर्भः -

पदजन्यपदार्थोपस्थित्यादिनिखिलकारणेषु सत्सु 'नीलो घटः' इत्यादाविव 'नीलस्य घटः' इत्यादावपि नीलत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधः कुतो नोत्पद्यते? समानविभक्तिकत्व-

[1]श.श.प्र. कारिका-३

[2]व्यु.वा., पृ.१

[3]स च क्वचिदभेदः। क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः (व्यु.वा., पृ.२०)

रूपनियमभङ्गप्रसङ्गस्तु नैवापत्तिकृदितिरीत्या शङ्कामुद्भाव्य 'नीलस्य घटः' इत्यादौ अभेदान्वयबोधोपयोगिनी आकाङ्क्षैव नास्तीति व्युत्पत्तिवादे गदाधरभट्टाचार्यः समाधत्ते[4]। तस्यायमाशयः - नीलत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणं, न तु केवलं नीलपदसमभिव्याहृतघटपदत्वरूपाकाङ्क्षाज्ञानं, निरुक्तरीत्या व्यभिचारात्।

'नीलघटः' इत्यादिसमस्तस्थले तु नीलपदाव्यवहितोत्तरघटपदत्वरूपाकाङ्क्षाज्ञानं घटपदाव्यवहितपूर्ववर्त्तिनीलपदत्वरूपाकाङ्क्षाज्ञानं च कारणं वक्तव्यम्। उक्तस्थले (नीलस्य घट इत्यत्र) एकस्या अपि एतादृश्या आकाङ्क्षाया अभावान्नाभेदान्वबोधापत्तिः।

तत्र तावदभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावस्वीकारे नीलं घटमित्यादिस्थलेऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधोत्पादेऽपि तदव्यवहितपूर्वक्षणे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यासत्त्वाद् व्यभिचारः स्यादतः प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमानाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावोऽङ्गीकार्यस्तथा च नीलं घटमित्यादि स्थलीयाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरत्वस्याभावात् तादृशशाब्दबोधस्य कार्यतावच्छेदकानाक्रान्तत्वात्तदव्यवहितपूर्वक्षणे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यावर्तमानत्वेऽपि न क्षतिः। तत्र तु द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरत्वं वर्तते। अतस्तादृशशाब्दबोधं प्रति द्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणं वाच्यम्। एवमेव नीलेन घटेनेत्यादावपि बोध्यम्।

एवमप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षाज्ञानाव्यवहितोत्तरं शाब्दबोधानुत्पादाद् अप्रामाण्यज्ञानानास्कन्दिताकाङ्क्षाज्ञानस्यैव कारणत्वं वक्तव्यम्। तथा च प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरजायमा-

---

[4]नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् (व्यु.वा., पृ.२२)

नाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावोऽङ्गीकार्यः।

ननु निरुक्तरीत्या कार्यकारणभावस्वीकारे यत्र स्थलविशेषे प्रथमक्षणे चैत्रात्मनि अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं वर्तते, मैत्रात्मनि चाप्रामाण्यज्ञानानास्कन्दितद्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानं विद्यते, तादृशस्थले द्वितीयक्षणे मैत्रात्मन्युत्पन्नेऽभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधे व्यभिचारः, तत्र प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तरत्वस्य सत्त्वेऽपि तदव्यवहितप्राक्क्षणेऽप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यासत्त्वादिति चेत्?

एतद्दोषनिरसनार्थं प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानविशिष्टतादृशशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य कारणता वाच्या। वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वाव्यवहितोत्तरत्वैतदुभयसम्बन्धेन। तथा चोक्तस्थले मैत्रात्मन्युत्पन्ने शाब्दबोधे प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानवैशिष्ट्यं नास्ति, तत्र स्वसामानाधिकरण्यस्याभावात्।

अत्र वैशिष्ट्यघटकस्वसामानाधिकरण्यमात्रोक्तावुक्तदोषवारणेऽपि यत्र स्थलविशेषे चैत्रात्मनि प्रथमक्षणेऽप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं जातम्, कालान्तरे तत्रैवाप्रामाण्यज्ञानानास्कन्दितद्वितीयान्तनीलपदसमभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानवशादभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधोदयः, तादृशशाब्दबोधे व्यभिचारः तत्र प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानसामानाधिकरण्यस्य सत्त्वेऽपि तदव्यवहितपूर्वमप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यावर्तमानत्वात्। स्वाव्यवहितोत्तरत्वस्य निवेशे तु तादृशाकाङ्क्षाज्ञानस्य स्वसामानाधिकरण्यसम्बन्धेन तादृशशाब्दबोधे सत्त्वेऽपि स्वाव्यवहितोत्तरत्वसम्बन्धेनासत्त्वाद् वैशिष्ट्यासम्भवात् तदव्यवहितपूर्वं तादृशाकाङ्क्षाज्ञानस्यासत्त्वेऽपि न क्षतिः।

नन्वभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वाच्छिन्नविशेष्यताशालिशाब्दबोधत्वस्य कार्यतावच्छेदककोटिप्रवेशः कुतः? उक्तोभयसम्बन्धेन

प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानविशिष्टं प्रति अप्रामाण्यज्ञानानास्कन्दिततादृशाकाङ्क्षाज्ञानस्य कारणत्वमस्त्विति चेत्, न, तथा सति यत्र स्थले प्रथमक्षणे चैत्रात्मनि अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं जातम्, आत्मान्तरे चायमेकः, अयमेक इति चैत्रमैत्रोभयविषयिणी अपेक्षाबुद्धिस्ततो द्वितीयक्षणे चैत्रमैत्रविशेष्यकद्वित्वोत्पत्तिः, तादृशद्वित्वे व्यभिचारः, तत्र प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानविशिष्टत्वं वर्तते, स्वाव्यवहितोत्तरत्वस्वसामानाधिकरण्योभयस्यापि सत्त्वात्। तदव्यवहितपूर्वञ्चाप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यासत्त्वात्।

ननूक्तदोषवारणाय ज्ञानमात्रस्य निवेशः क्रियतां तादृशशाब्दबोधत्वस्य कार्यतावच्छेदकतया प्रवेशे गौरवादिति चेत्, न, तथा सति यादृशस्थले प्रथमक्षणे अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाविषयकं वह्निव्याप्यधूमवत्पर्वतविषयकञ्चैकं समूहालम्बनात्मकं ज्ञानं, तदुत्तरक्षणे पर्वतो वह्निमानित्यनुमितिः, तत्र व्यभिचारः, तस्या अपि तादृशाकाङ्क्षाज्ञानविशिष्टत्वात् तदव्यवहितपूर्वञ्चाप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथतान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यासत्त्वात्।

नचोक्तदोषवारणाय तादृशाकाङ्क्षाज्ञानविशिष्टशाब्दबोधत्वस्यैव कार्यतावच्छेदककोटौ प्रवेशः क्रियतां तावतापि निरुक्ताभेदान्वयबोधत्वस्य कार्यतावच्छेदतयाऽनिवेशप्रयुक्तं लाघवमस्त्येवेति वाच्यम्, एवं सति यत्र प्रथमक्षणे अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानम् अप्रामाण्यज्ञानानास्कन्दितषष्ठ्यन्तराजपदसमभिव्याहृतप्रथमान्तपुरुषपदत्वरूपाकाङ्क्षाज्ञानञ्च (समूहालम्बनात्मकं) जातम्, तदुत्तरं 'राज्ञः पुरुषः' इति भेदान्वयबोधः, तत्र व्यभिचारात्, निरुक्तोभयसम्बन्धेन प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानविशिष्टशाब्दबोधत्वस्य तत्र सत्त्वेऽपि तदव्यवहितपूर्वमप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानस्यासत्त्वात्। अतोऽभेदान्वयबोधत्वस्यापि निवेश आवश्यकः।

इत्थञ्च स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरत्वैतदुभयसम्बन्धेन प्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानविशिष्टाभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दितप्रथमान्तनीलपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावः सम्पन्न इति सङ्क्षेपः॥

**शब्दसंक्षेपः**

१. श.श.प्र. - शब्दशक्तिप्रकाशिका

२. व्यु.वा - व्युत्पत्तिवादः

**सन्दर्भग्रन्थसूची**

१. व्युत्पत्तिवादः, शास्त्रार्थकलाटीकासहितः, पं. वेणीमाधवशास्त्री, चौखम्बा संस्कृत सिरीज़ आफिस, बनारस, १९९२

२. शब्दशक्तिप्रकाशिका, सम्पा. श्रीजीवानन्दविद्यासागर भट्टाचार्य, न्यू आर्यमिशन, कलिकता, १९०४



# अङ्कीययुगे हस्तलिखितानामभिगमः सूचिरचनं प्रतिमावाग्योजना परस्परसंबद्धानां च सूचिप्रतिमासंस्करणान्वेषणतन्त्रांशानां जाले प्रदर्शनम्

पीटर एम. श्रॉफ

**उद्धारः**

संस्कृतहस्तलिखितानामभिगम्यता बहुधा वार्यते ग्रन्थसमुदायस्यान्वेषितृभ्यो दूरतया हस्तलिखितानां संबद्धान्वेषणसामग्र्याः पृथक्त्वेन परिदत्तांशस्य न्यूनताभावो वा हस्तलिखितानां समूदायेषु व्यस्तता हस्तलिखिते वा पत्राणां क्रमभङ्गः। यत्पत्राणां क्रमेण स्थापनं हस्तलिखितानां व्यूहे स्थापनं सूचिरचनमङ्कीयप्रतिमाकरणं तेषां च सूचीनां प्रतिमानां च जालस्थापनमेतान्प्रतिबन्धानपहरति तत्स्पष्टमेव। अपि तु जालस्थसंस्कृतवाङ्मयान्वेषितृणामेषोऽधिकः प्रतिबन्धोऽभिमुखीभवति। प्रायेण पश्चिमदेशेष्वभिजातं सूचनाप्रक्रियातन्त्रशास्त्रं संस्कृतभाषायामयोग्यं भवति। यस्मिन्साधारणाङ्कीयतन्त्रज्ञान एकाकारपश्चिमभाषासमयाः स्वीकृतास्तत्संस्कृतभाषीया विविधाक्षराधीनलिपयो लिप्याधीनपदश्लेषः सन्धिर्विविधविभक्तयः कृत्तद्धितसमासाः प्रतिरुन्धन्ति। तत्फलेन साधारणान्वेषणतन्त्रांशः संस्कृतभाषायां न सिध्यति। यस्तु संस्कृतपुस्तकालयेन निर्मितो विशिष्टस्तन्त्रांशः स तानधिकान्प्रतिबन्धानतिक्रामति। अथ च यानि प्रारूपाणि च सहकार्यक्षमतासमयाश्चान्वेषितृभिः संस्कृतहस्तलिखितान्यन्तर्जालद्वारेण प्रवेशयितुमावश्यकानि सन्ति तेषां निर्माणमधुना प्रथमवारे संस्कृतपुस्तकालयेन निर्मितो विशिष्टस्तन्त्रांशः सम्भावयत्येव।

हस्तलिखितानामेकाधिका समस्या भवति यन्मुद्रितानामङ्कीयानां च पुस्तकानां न वर्तते। किमेतत्। अन्विष्टा वाग्दुष्प्रापणीया शब्दो वा स्याद्वाक्यं वा श्लोको वा यतोऽनुक्रमणी न स्याद्यस्मिंश्च कक्षे हस्तलिखितं द्रष्टव्यं तत्र संबद्धसंस्करणान्यनुपलब्धानि। ततः शब्दान्वेषणे बहुकालोऽपेक्ष्यते। तन्निरासाय हस्तलिखितेषु पत्राणामङ्कीयप्रतिमानां संबद्धाभिरङ्कीयसंस्करणे वर्तमानाभिर्वाग्भिः संयोजयितुं संस्कृतपुस्तकालयेन प्रारूपाणि सहकार्यक्षमतासमयास्तन्त्रांशश्च निर्मितः। तथा संबद्धाङ्कीयसंस्करणस्थवाग्भिर्विशिष्टहस्तलिखितपत्रस्थास्विष्टवाक्षु प्रवेशः संसाध्यते। तथा च यस्तन्त्रांशोऽन्विष्टप्रातिपदिकस्य विविधविभक्त्यन्तशब्दरूपाणि विविधसंहितशब्दरूपाणि च प्राप्तुं समर्थः स हस्तलिखितानामङ्कीयप्रतिमास्वतिदिश्यते। स चातिदेशः साधारणाङ्कीयज्ञानाहरणरीतिभ्यः साधारणाङ्कीयान्वेषणरीतिभ्यश्च संस्कृतहस्तलिखितपत्रस्थवाचः प्राप्तुं पन्थानं विवृणुते।

## संस्कृता भाषा तस्यां रचितं वाङ्मयं च

संस्कृता वाग्भारतदेशे त्रिसहस्राब्दिकवर्षान्प्रधानज्ञानसंस्कृतिभारिणी भाषा भवति। तस्यां रचितं वाङ्मयं मुद्रणयन्त्रस्याविष्कारात्पूर्वं पृथिव्यां महिष्ठो वाङ्मयस्य राशिर्वर्तते। वैदिकवाङ्मयमैतिहासिकभाषाविज्ञाने महत्त्वपूर्णं वर्तते। संस्कृतवाङ्मयं हि न भारतवर्ष एव प्रधानं किं तु दक्षिणजम्बुद्वीपेऽन्यदेशेषु दक्षिणप्राचीजम्बुद्वीपेऽप्यप्रथत। बौद्धधर्मसहितं च तिबेटदेशे चीनदेशे कोरेअदेशे जपानदेशे चाप्रथत। संस्कृतभाषायां चत्वारि वर्षसहस्राणि सर्वेषु विषयेषु वाङ्मयं रचितं तद्यथेतिहासपुराणे काव्यानि नाटकानि दर्शनानि गणकशास्त्राण्यन्यानि शास्त्राणि च। पञ्चाशल्लक्षाधिकानि हस्तलिखितान्युपलभ्यन्ते। संभवति त्रिशतलक्षाण्यनुजीवितानि सन्त्येव। यानि हस्तलिखितानि यवनभाषासूपलभ्यन्ते तेषामेतच्छतगुणं वर्तते। एतानि मुद्रणयन्त्रस्याविष्कारात्पूर्वं सर्वेषां देशानां महिष्ठः संस्कृतिदायो वर्तते। भारतदेशस्य संविधानेऽष्टमे विभागे चतुर्दशसु राजभाषासु संस्कृतभाषा तथा च द्वाविंशत्यामपि भारतदेशस्य वर्तमानासु राजभाषास्वन्तर्गता वर्तते। एकनवत्युत्तरनवशताधिकसहस्रवर्षीयजनगणनामनु प्रायः पञ्चाशत्सहस्राः संस्कृतभाषाया वक्तार आसन्। आकाशवाण्यां दूरदर्शनेन च वार्त्ताः संस्कृतभाषायां प्रतिदिनं प्रसारिताः। कर्णाटकप्रदेशस्य मत्तुरग्रामे मध्यप्रदेशस्य च जिह्विग्राम इत्यादिषु कतिपयेषु ग्रामेषु संस्कृतभाषा प्रायः प्रथमा भाषास्ति। साररूपेण वक्तुं शक्यते यत्संस्कृतभाषा जीवत्येव शास्त्रीयवाङ्मयिकधर्मिकप्रयोगेषु।

अधुनापच्छीघ्रमुपेष्यति। शतत्रयवर्षपर्यन्तं वा पञ्चशतवर्षपर्यतं वा हस्तलिखितानि तिष्ठन्ति। तस्यार्धं गतमेव। हस्तलिखितानां पुनर्लेखनपरम्परा नष्टप्रायो वर्तते। पण्डितानामाधुनिकविदुषां संख्या न्यूनीभवति। चिकित्सिकावृत्तिनिर्माणमतिदुर्गं कार्यमेव। हस्तलिखितेषु जीर्य्यमाणेषु तत्रस्थाया विद्याया नाशो ध्रुवमापत्स्यति यदि शीघ्रं प्रतिकरो नोत्पत्स्यति।

## प्रसारमाध्यमेषु परिवर्तने विद्याया रक्षा नाशश्च

वर्तमानकाले प्रसारमाध्यमे परिवर्तनं प्रवर्तते। यथा पुराणकाले मौखिकीपरम्परा प्रधानासीत्तदनन्तरं च लेखनपरम्परा तदनन्तरं च मुद्रणमाध्यमं तथैवाधुना सङ्गणकीकृतिः प्रधानीभवति। प्रसारमाध्यमेषु कश्चिल्लाभः काचिद्धानिः। लेखनमाध्यमेन विशिष्टसंदेशा अनायासेन दूरं प्रथिताः सन्ति। मुद्रणमाध्यमस्य लाभ एष यत्संदेशाः समानरूपेण बहुषु स्थलेषु प्रथिता भवेयुः। किं तूक्तमेतत्।

**पुस्तकेषु च या विद्या परहस्तेषु यद्धनम्।**
**उत्पन्नेष्वेव कार्येषु न सा विद्या न तद्धनम्॥**

यद्यपि कश्चिल्लाभो नूतने नूतने प्रसारमाध्यमे भवत्येव तथापि माध्यमपरिवर्तने ज्ञानस्य भ्रंशः संभवति। कथम्। प्रतिकृतिर्मूलकृतेः साधुतरा न संभवति। ज्ञानस्य भ्रंशः स्याद्यदि नवीनमाध्यमं समस्तविज्ञानं समायोजयितुमसमर्थं स्यात्। अथवा ज्ञानस्य भ्रंशः स्याद्यदि जनः सङ्केतान्नवमाध्यमेऽनुवदितुं न सिध्येत्। सोऽपि स्याद्यदि केवलनवीनमाध्यमशीला युवजनता पुराणमाध्यमस्थज्ञानस्याभिगमे परिमुह्यति। यदि वा पुराणमाध्यमस्य निधानं नश्येत्तर्हि ज्ञानस्य भ्रंशः स्यात्।

ज्ञानभ्रंशापत्तिवारणाय ज्ञानं च प्रणाशात्त्राणाय विशिष्टो यत्न आवश्यकः। नाशाज्ज्ञानं परित्रातुं किमपेक्ष्यते। यतः प्रतिकृतिर्मूलकृतेः साधुतरा न संभवति ततो मूलकृतिमेव प्रतिकुर्यान्न दुष्टप्रतिकृतिम्। यद्यपि वैदिका ग्रन्थाः प्रथन्तेऽङ्कीयरूपे मुद्रितरूपे हस्तलिखितरूपे मौखिकीरूपे च सर्वं ज्ञानं सर्वेषु रूपेषु नास्त्येव। केषुचिदङ्कीयसंस्करणेषु स्वरा न विद्यन्ते। यदि त एव प्रत्यस्थास्यन्नन्ये चानङ्क्ष्यंस्तर्हि स्वरविद्यानङ्क्ष्यत्। केषुचिन्मुद्रितेषु संस्करणेषु रोमनलिप्यामनुमिता एव स्वराः प्रदर्शिताः प्रत्यक्षश्रुतस्वरा न। यदि तान्येव प्रत्यस्थास्यन्नन्यानि चानङ्क्ष्यंस्तर्हि भिन्नपरम्परास्वरविद्यानङ्क्ष्यत्। केषुचिन्मुद्रितेषु संस्करणेषु हस्तलिखितस्वराङ्केभ्यो भिन्नस्वराङ्काः प्रयुज्यन्ते यथा चन्द्रबिन्द्ववग्रहसमुदायस्थान 'ठँ' मुद्रणाक्षरेषु समुदायाभावाद् 'ठँ' इत्यस्य भावाच्च। यदि तान्येव संस्करणानि प्रत्यस्थास्यन्नन्यानि चानङ्क्ष्यंस्तर्ह्यङ्कार्थनाशः समभविष्यत्। ठँ-अक्षरस्वीकरणस्य स्थाने विशिष्टचन्द्रबिन्द्ववग्रहसमुदायमुद्रणरूपं निर्मापणीयमासीत्। नवीनमाध्यमं परिवर्तितव्यं समस्तविज्ञानं समायोजयितुम्। न ज्ञानं नाशयेन्नवीनमाध्यमस्य न्यूनतया। अवश्यमेतत्कर्तव्यं यदिष्टं ज्ञानं नवीनमाध्यमे रक्षणीयम्। न त्वालस्यात्तस्य विनाशः स्वीकरणीयः। इष्टज्ञानस्वीकरणार्थं नवीनमाध्यमस्य परिवर्तने प्रयत्नः कर्तव्यः। नवा रीतयोऽन्वेषितव्या इष्टसङ्केतान्नवीनप्रसारमाध्यमेऽनुवादयितुम्।

नवमाध्यमेषु प्रौद्योगिकीप्रगतयः प्रार्पयन्ति नवसंभवाञ्ज्ञानस्य प्रथनाय। तद्यथोच्चारितशब्दापेक्षया लेखनस्य चिरस्थायिता। यथा हस्तलिखितानामपेक्षया मुद्रितानां पुस्तकानां विपुलविस्तारस्तत्संबद्धेन च पठनपाण्डित्यम्। यथा संपूर्णकोशकण्ठीकरणापेक्षयानुक्रमणिका तदपेक्षया चान्वेषणतन्त्रांशः। यत्र नवीनमाध्यमे ज्ञानस्याभिगमे साधुतरा रीतयः प्रचलन्ति तत्र पुराणमाध्यमस्थज्ञाने युवजनता न परिमुह्येदिति यत्नः कर्तव्यः। पुराणज्ञानं नवीनमाध्यमे तथानुवदितव्यं यथा नवीनाभिगमरीतयस्तज्ज्ञानेऽपि स्युः। साधुतरा नवा शीलादरणीया पुराणज्ञानविषये स्वीकर्तव्या च। अन्ततश्च शीघ्रं प्रयत्नः कर्तव्यः पुराणमाध्यमनाशात्पूर्वम्।

अङ्कीयप्रौद्योगिकी सङ्गणकभाषाविज्ञानमन्तर्जालश्च मुद्रणतन्त्रविज्ञानमतिक्रामन्ति। ते मुद्रणमाध्यमापेक्षयोत्कृष्टरीतीः प्रार्पयन्ति। तद्यथा सरलतरः

शीघ्रतरश्चाभिगमः । चित्रस्याक्षरस्य वा प्रवर्धनम् । विविधविज्ञापनानां महीयत्संयोजनम् । अधिका विशेषाः । तथा चाविस्पष्टेषु निगूढेषु च ज्ञानयोनिष्वभिगमः ।

**भारतीयसांस्कृतिकदायप्रवेशप्रतिबन्धातिलङ्घनम्**

संस्कृतपुस्तकालयो यतते हस्तलिखितमुद्रितप्रसारमाध्यमस्थसंस्कृतज्ञानं त्रातुमङ्कीयप्रसारमाध्यमे स्थापयितुम् । तत्सिद्धये बहुकार्यं कृतमेव । तद्यथा प्रामाणिकशाब्दिकवर्णसङ्केतं निर्मितम् (एस्० एल्० पी० १, पश्य Linguistic Issues in Encoding Sanskrit, परिशिष्टं बी, पत्त्राणि १४९--१५६ ; तथा एस्० एल्० पी० २--३ परिशिष्टे सी, दी) । यूनिकोडित्यत्राष्टषष्टिर्वैदिकहस्तलिखितपुस्तकानुवादनावश्यका वर्णसङ्केता आयोजिताः[1] तेषां प्रयोगं दर्शयितुं पत्त्रिका निर्माता[2] । वर्णसङ्केतानुवादनाङ्कीयतन्त्रांशा निर्मिताः । प्रधानाङ्कीयसंस्कृताङ्ग्लकोशो भाषाविज्ञानाङ्कीयांशयोजनयोग्यीक्रीयते । कतिपया अन्या अङ्कीयकोशा निर्मिताः । विभक्तिप्रदायकतन्त्रांशो विभक्तिव्याकरणतन्त्रांशश्च निर्मितः । अन्यैः शोधकारैरन्ताराष्ट्रियसंस्कृतसङ्गणकभाषाविज्ञानसमितिः प्राक्रियत द्वितीया चान्ताराष्ट्रियसंस्कृतसङ्गणकभाषाविज्ञानसङ्गोष्ठी व्यधीयत ।

**बहुविधा सूची प्रतिमावाग्योजना च**

तत्रामरकीयराष्ट्रियमानविकीविज्ञाननीविनाधृते भारतीयप्रधानसांस्कृतिकवस्तुप्रवेशवर्धनमिति नामके प्रकल्पे ब्रौन्विश्वविद्यालयस्थानां पेन्सिल्वनियविश्वविद्यालयस्थानां च महाभारतविषयकाणां भागवतपुराणविषयकाणां च हस्तलिखितानामङ्कीया सूची रचिता । सूचिरचने षड्विंशत्यां विशिष्टेसु विषयेषु दत्तानि सङ्कल्यक्रियन्त । येषु विषयेषु दत्तानि सङ्कलितानि तानि प्रथमायां पत्त्रिकायां प्रदर्शितानि ।

**पत्त्रिका १**

सूचिरचने षड्विंशतिः विशिष्टाः विषयाः

| | | | |
|---|---|---|---|
| 1 | सङ्कलः | 4 | पत्त्रस्थरेखासङ्ख्या |
| 2 | अङ्कः | 5 | उन्नतिरायामश्च |
| 3 | पत्त्रसङ्गणनम् | 6 | आधारः |

[1] http ://sanskritlibrary.org/tomcat/sl/Unicode.jsp

[2] http ://sanskritlibrary.org/tomcat/sl/BC ?name=Accent&context= ReferenceWorks

7 अवस्था
8 बन्धः
9 ग्रथनम्
10 लिपिः
11 पत्रे लेखनव्यवस्था
12 सीमाः
13 चित्राणि
14 आयोजनानि
15 संपूर्णता
16 खिलानि
17 हस्ताः
18 उत्पत्तिः । तस्य लेखकः स्थानं च
19 स्वामिनः पाठकाश्च
20 संबद्धानि संस्करणानि संशोधनानि च
21 पुष्पिका
22 पुष्पिकायाः परं यल्लिखितम्
23 शीर्षकम्
24 रचनाकारः
25 लेखकः
26 अन्यद्विशिष्टम्

पृथक्त्वेन सहितैर्वा सर्वैः सूचिस्थैर्विषयैर्हस्तलिखितान्यन्वेषितुं शक्यन्ते । सूचिः प्रथमे चित्रे प्रदर्शिता ।

general | identifiers | person | title | content | layout, hand, and decoration | physical | history | administrative

title: Any
main title: Bhagavadgītā [penn0492.xml:61]
part title: Any
commentary title: Any
context title: Any
descriptive title: Any
title translation: Any
title mentioned: Any

Clear Submit

penn0492.html penn0492.xn
penn2339.html penn2339.xn
msindic5.html msindic5.xml
penn0555.html penn0555.xn
penn0559.html penn0559.xn
penn0773.html penn0773.xn
penn0906.html penn0906.xn
penn2199.html penn2199.xn
penn2233.html penn2233.xn
penn2241.html penn2241.xn

Figure 4.1 : संस्कृतविश्वविद्यालयस्य हस्तलिखितानां सूचिः

## संस्कृतपुस्तकालयस्य हस्तलिखितसूचिः

ततश्चाङ्कीयप्रतिमाश्च कृताः । ततोऽङ्कीयप्रतिमाः संबद्धाङ्कीयसंस्करणैः संयोजयिताः । अङ्कीयप्रतिमास्थप्रदेशाः संबद्धाभिरङ्कीयसंस्करणे वर्तमानाभिर्वाग्भिः संयोजयिताः सीतानामकस्य संस्कृतप्रतिमावाग्संयोजकस्य तन्त्रांशस्य साहाय्येन अ-

न्वेषणतन्त्रांशो निर्मितः। ततस्ते परस्परं संबन्ध्यक्रीयन्त। अथाङ्कीयसूचिद्वारेणाङ्कीयसंस्करणद्वारेण वा हस्तलिखितपत्रस्था विशिष्टा इष्टा वाचो विदितुं प्रदर्शयितुं च शक्यन्ते। अन्वेषणदृष्टान्तो द्वितीये चित्रे प्रदर्शितः।




Figure 4.2 : संस्कृतविश्वविद्यालयस्य हस्तलिखितपत्रस्थवागन्वेषणम्

**अन्वेषणदृष्टान्तः**

अन्वेषणतन्त्रांशोऽङ्कीयसंस्करणस्थवाक्ष्वन्वेषणं कृत्वा येषु केषु चिद्धस्तलिखितपत्रेषु संबद्धा वाचस्तिष्ठन्ति तासां परिसन्धीः सङ्कलीकृत्वा सूच्यां स्थापयति प्रथमस्य च हस्तलिखितस्य संबद्धा वाचः प्रदर्शयति। सर्वा प्रदर्शिता वाक्तद्बद्धस्य परिसन्धिर्भवति। नोदनेन तत्पत्रं प्रदर्शयति यस्मिन्सा वागङ्किता तिष्ठति।

एवं संस्कृतपुस्तकालयोऽङ्कीयमाध्यमं प्रयुङ्क्ते हस्तलिखितपत्रस्था इष्टवाचः प्रापयति। एवं च साधारणाङ्कीयज्ञानाहरणरीतीः साधारणाङ्कीयान्वेषणरीतीश्च संस्कृतहस्तलिखितपत्रस्थवाक्ष्वतिदिशति।

**सन्दर्भग्रन्थसूची**

१. Linguistic issues in encoding Sanskrit, Peter Scharf and Hyman Malcolm, The Sanskrit Library, Motilal Banarsidass, Delhi, 2011.



# पाणिनीयव्याकरणं दर्शनशास्त्रञ्च

सच्चिदानन्दमिश्रः

भारतवर्षस्य यदपि साहित्यं विद्यते, यस्तावद् इतिहासो विद्यते, तत्र विचारे कृते पाणिनिः मानदण्डरूपेण निर्धारयितुं शक्यते। पाणिनिरैतिहासिकदृष्ट्या व्यवस्थितरूपेण शास्त्रकृत्सु प्राचीनतम इति सुनिश्चिततया वक्तुं शक्यते। यतो हि पाणिनेः प्राक् यत् किमप्यासीत् तत् सर्वं तथा व्यवस्थितं नासीत्। व्यवस्थिततया शास्त्रनिर्माणाय काचन सरणिर्भगवता पाणिनिना एव प्रदर्शिता। वेदानामस्तिताविषये नास्ति सन्देहलेशः। परन्तु शास्त्रान्तराण्यपि तथैव विकसितानि आसन्निति नैव निश्चयेन वक्तुं शक्यते। दर्शनेषु वैशेषिकदर्शनं साङ्ख्यदर्शनं वेदान्तदर्शनं सर्वाण्यपि पाणिनेः पश्चादेव आयान्ति।

पाणिनिव्याकरणस्य दर्शनशास्त्रस्य च परस्परं सम्बन्धः प्रभावश्च यदा विचार्येते तदा प्रायशः चत्वारो बिन्दवः समायान्ति -

1. व्याकरणस्य शास्त्रनिर्माणपद्धतिः
2. व्याकरणस्य प्रक्रियांशः
3. व्याकरणदर्शनम्
4. परिष्काराश्च

व्याकरणं खलु त्रिधा विभक्तुं शक्यते विभज्यते च। प्रथमं प्रक्रियाशास्त्रम्, द्वितीया परिष्कारप्रक्रिया, तृतीयं भवति व्याकरणदर्शनम्। वस्तुतः व्याकरणशास्त्रमेतेषु त्रिषु भागेषु विभक्तुं शक्यते। परन्तु शास्त्रनिर्माणपद्धतौ समादाय व्याकरणस्य दर्शनशास्त्रेण सह सम्बन्धप्रभावयोः विषये विचारः करणीय इति मे मतिः, तथैव च मयास्मिन् प्रबन्धे क्रियते। एतदपि ध्येयं यत् प्रभावः केवलमेकपक्षीयो न भवति। प्रभावस्तावत् परस्परमादानप्रदानरूपेण भवति, किमपि दीयते किमपि गृह्यते। व्याकरणशास्त्रेण दर्शनान्तरेभ्यः किमपि प्रदत्तमपि किमपि गृहीतमपि। अनयैव दिशा परस्परप्रभावस्य व्याख्या कर्तुं शक्यते। अत्रैतत् चिन्त्यते यत् तत् किं विद्यते यद् इदमित्थंतया व्याकरणशास्त्रेण दर्शनान्तरेभ्यः प्रदत्तं भवेत्, तच्च किं विद्यते यत् दर्शनान्तरैः व्याकरणशास्त्राय प्रदत्तं स्यात्।

## शास्त्रनिर्माणपद्धतिः

पाणिनिना नवीना काचन शास्त्रनिर्माणप्रक्रिया आविष्कृता सा हि निश्चयेन सर्वातिशायिनी। अत्रेदमपि ध्येयं यत् पाणिनीव्याकरणेन शास्त्राणां विकासः कथं करणीय इत्यत्रापि सम्यक्तया मार्गनिर्देशो विहितः। पाणिनिना शास्त्रनिर्मा-

णाय अपूर्वः कश्चनादर्शः ग्रन्थकाराणां शास्त्रकाराणां पुरस्तात् संस्थापितः, तमेव दृष्टौ विधाय शास्त्रकृद्भिः शास्त्राणि निर्मितानि। पाणिनेः सूत्राण्याधारीकृत्य वार्तिककृता कात्यायनेन सूत्राणामालोचनारूपाणि वार्तिकानि प्रणीतानि। पतञ्जलिस्तु सूत्राणां वार्तिकानाञ्च सम्यगालोचनां विधाय संज्ञानुरूपं महाभाष्यं प्रणीतवान्। इदं हि भाष्यमर्थगाम्भीर्येण प्रसादगुणेन च सर्वाण्यप्यन्यानि भाष्याण्यतिशेते इति अस्माकं मतिः। बहुधा हि कात्यायनः कस्यचित् सूत्रस्य व्यर्थतां प्रतिपादयति। परन्तु पतञ्जलेरिदं वक्तव्यं विद्यते यत् अस्मिन् शास्त्रे नैकेनापि वर्णेन व्यर्थेन भवितव्यं किमु एतावता सूत्रेण। अत एव सम्यगालोच्य कुत्रचित् कात्यायनस्य वार्तिकानां प्रत्याख्यानं सः करोति कुत्रचित्तु सूत्राणां गभीरतममभिप्रायं प्रदर्शयति। क्वचित्तु सूत्राणां सार्थकतां भिन्नया पद्धत्या प्रतिपादयति। कस्यचिदपि शास्त्रस्य समुन्नतिरनेनैव पथा भवितुमर्हति, यत्र किन्तावद् दुरुक्तं किं वा अनुक्तं तत् सर्वमपि सम्यक्तया विचारितं भवेत्। तदनुसारमेव च सिद्धान्तानां विकासो भवितुमर्हति। अन्यथा हि शास्त्रं नवनवविचारवारिपरिपूरितसरिद्वत् रमणीयं पवित्रं च नैव भवितुं शक्नुयात् किन्तु गतिहीनसरोवरवारिवत् सारहीनं दूषितं चाभविष्यत्। अत एव शास्त्रेषु नितरां परिष्कारोऽपेक्षितो भवति। स च परिष्कारो नान्यथा सम्भवति। एषैव पद्धतिः स्वीकार्या। अत एव प्रोच्यते यथोत्तरं मुनीनां प्रामाण्यमिति। पाणिनेः व्याकरणं सूत्रमर्यादया ग्रन्थलेखनस्यादर्शभूतं, परन्तु न केवलं पाणिनेः व्याकरणमपितु अन्यान्यपि शास्त्राणि तथैव सूत्रमर्यादया लिखितानि सन्ति। न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तादीनि सर्वाण्यपि शास्त्राणि यद्यपि सूत्रमर्यादामाधारीकृत्य लिखितानि, परन्तु यथा सौभाग्यं पतञ्जलिं व्याख्याकाररूपेण प्राप्य पाणिनिना अवाप्तम्, न तथा सौभाग्यं शास्त्रान्तरैरवाप्तम्।

पतञ्जलिना महाभाष्ये तावद् विविधाः दर्शनशास्त्रसम्बद्धाः विषया अपि सम्यक्तया विवेचिताः सन्ति। पाणिनिस्तावदस्माकं कृते प्रमाणभूतो भवति, स आदर्शं प्रतिष्ठापयति यत् कया रीत्या ग्रन्थस्य शास्त्रस्य निर्माणं करणीयम्। भगवान् पतञ्जलिस्तावत् अस्माकं पुरस्ताद् व्याख्यानस्यादर्शं स्थापयति। शास्त्रस्य व्याख्या कथं कर्तव्या, शास्त्रस्यालोचना कथं कर्तव्या। तस्य पाणिनिपक्षेऽपि नास्ति कश्चनाग्रहः, न वा विद्यते कश्चन द्वेषो वार्तिककारं प्रति। सः निष्पक्षतया द्वयोः पक्षौ समालोचयति। तदनन्तरञ्च स्वकीयान् सिद्धान्तान् प्रस्तौति। अत एव आलोचना कया रीत्या करणीया, कथं मतानां समीक्षणं करणीयमित्यत्र पतञ्जलिः शलाकापुरुषरूपेण अस्माकं पुरस्ताद् उपस्थितो भवति। द्वयोरेव गुणदोषौ विचार्य बहुत्र सूत्राणां व्यर्थतामपि सः प्रतिपादयति, बहुत्र तु प्रत्याख्यानं वार्तिकानां करोति। स कस्यचिदपि पक्षे निर्भरो नास्ति।

पाणिनिना संज्ञा, परिभाषा, विधिः, नियमः, अतिदेशः, अधिकारश्च अनया रीत्या षड्विधानां सूत्राणां प्रणयनेन काचनापूर्वैव ग्रन्थनिर्माणपद्धतिराविष्कृता। सैषा प्रक्रिया अतिसंक्षेपेण स्वकीयसिद्धान्तानां प्रतिपादनाय सर्वथोपकारिणी भवति। अत एव केवलं चतुःसहस्रसूत्रैरेव जटिलायाः संस्कृतभाषायाः तादृशं सुसम्पन्नं सुघटितं व्याकरणं पाणिनिना व्यरचि यत् कुत्रचिदन्यत्र दुर्लभमेव। इमां प्रक्रियां समाश्रित्य संस्कृतव्याकरणस्य नियमानां सङ्ग्रहः सर्वथा सुकरो बभूव। तत्रापि बहुषु स्थलेषु अनुवृत्तिमाधारीकृत्य महता सङ्क्षेपेण शास्त्रसंरचना कृता। अनुवृत्तेः तथा प्रयोगः शास्त्रान्तरेषु न भवति. शास्त्रकृतां तादृशी नासीदपेक्षा, परन्तु बहुधा शास्त्रान्तरेष्वप्यनुवृत्तिः क्रियत एव। यथा न्यायसूत्रे उदाहरणसाधर्म्यात् साध्यसाधनमुदाहरणम् इत्युदाहारणलक्षणमुक्त्वा तथा वैधर्म्यात् इति कृत्वा अपरमपि लक्षणं प्रस्तूयते। अत्र द्वितीये सूत्रे प्रथमसूत्रात् साध्यसाधनमुदाहरणम् इत्यध्याहार्यं भवति। शास्त्रान्तरेष्वपि तथैवान्यान्यप्युदाहरणानि शक्यन्तेन्वेष्टुम्। पाणिनीयव्याकरणेन या प्रक्रिया प्रतिपादिता सैव प्रक्रिया प्रायशो दर्शनान्तरैः शास्त्रान्तरैश्च स्वीकृता।

काणादं पाणिनीयं च सर्वशास्त्रोपकारकमिति यत् प्रोच्यते तत्र कारणमिदमेव यत् पाणिनिना यत् व्याकरणं निरूपितम्, तद् व्याकरणशास्त्रं सर्वातिशायि विद्यते। कथं हि तद् व्याकरणशास्त्रं प्रणीतम्, का विद्यते तस्य पद्धतिः ? तत्र पस्पशाह्निके भगवान् पतञ्जलिर्वदति लक्ष्यलक्षणे व्याकरणमिति। लक्ष्यं लक्षणुभयं यदा संयोज्यते तदा तच्छास्त्रं भवति[1]। लक्ष्यलक्षणयोः सम्यक्तया संयोजनेन शास्त्रं निर्मितं भवति। न्यायदर्शनस्य एका पद्धतिर्भवति उद्देशो लक्षणं परीक्षा चेति, प्रथमुद्देशः, तदनन्तरं लक्षणम्, तदनन्तरन्तु परीक्षा क्रियते। किं तावत् लक्षणम् ? तत्रैव पतञ्जलिर्वदति सामान्यविशेषवल्लक्षणमिति। इदं हि लक्षणस्य स्वरूपं सर्वेष्वपि शास्त्रेषु स्वीकर्तुं शक्यते। गोर्यदा लक्षणं क्रियते सामान्यविशेषवल्लक्षणमिति रीत्या तदा तस्य लक्षणं प्रोच्यते सास्नावान् पशुः गौरिति। सामान्यं पशुत्वं सास्नावत्त्वं हि विशेषः। तथैव यदा पृथिव्याः लक्षणं नैयायिकैः क्रियते तदा प्रोच्यते गन्धवद् द्रव्यं पृथिवीति। द्रव्यत्वं सामान्यं गन्धवत्त्वं विशेषः। परन्तु यदा हि सामान्यविशेषवल्लक्षणमिति रीत्या लक्षणस्य परिभाषा प्रस्तूयते तदा पतञ्जलेरयमाशयो विद्यते यत् उत्सर्गापवादन्यायेन शास्त्रं प्रवर्तनीयम्।

कश्चन नियम उत्सर्गो भवति, कश्चन चापवादो भवति[2]। आद्गुण[3] इति

[1]महा.पस्प, पृ.७०

[2]किंचित्सामान्यविशेषणवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ। (महा.पस्प. पृ.४३)

[3]अष्टा. ६/१/८७

भवत्युत्सर्गः। वृद्धिरेचि[4] भवत्यपवादः। उत्सर्गापवादन्यायेन सर्वमपि शास्त्रं निरूपयितुं शक्यते। सर्वाण्यापि लक्षणानि उत्सर्गापवादन्यायेनैव प्रस्तुतानि सन्तीति शक्यते प्रतिपादयितुं यतो हि यानि हि लक्षणानि भवन्ति तानि सामान्यविशेषवन्ति भवन्ति। विना सामान्यविशेषधर्मयोः परिग्रहं किञ्चनापि लक्षणं नैव प्रस्तोतुं शक्यते।

**व्याकरणस्य प्रक्रियांशः**

व्याकरणस्य प्रक्रियांश एव वस्तुतः व्याकरणपदेन प्रोच्यते। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति रीत्या व्याकरणपदस्य व्युत्पत्तिः प्रतिपाद्यते। अत एवैतद् वक्तुं शक्यते यत् प्रक्रियांश एव वस्तुतो व्याकरणस्य जीवनधायकं तत्त्वं भवति। तत्रैव वस्तुतो व्याकरणं पदं प्रयुज्यते। अस्याः प्रक्रियायाः शास्त्रान्तरेषु निपुणमुपयोगो भवति। अनेकत्र यत्रैव सन्देहस्य लेशो भवति तत्रैव शास्त्रकाराः व्याकरणशास्त्रस्य प्रक्रियां समाश्रित्य शब्दानां व्युत्पत्तिं विचार्य सन्देहं निवारयन्ति। अत एव व्याकरणस्य प्रक्रियांशः दर्शनेषु बहुधा सम्यक्तया उपयुक्तो भवति। व्याकरणस्य या प्रक्रियापद्धतिर्विद्यते दर्शनेषु बहुत्र तस्याः परिपूर्णतया उपयोगो दृश्यते। बहुधा तु विना प्रक्रियापरिज्ञानं विविधानां दर्शनसिद्धान्तानां परिचय एव न सम्यक्तया सम्भवति। अत्र हि केचन स्वल्पा एव विषया निर्दर्शनरूपेण तावदुपस्थाप्यन्ते।

उक्तमेव व्याकरणस्य प्रमुखं प्रयोजनं पतञ्जलिना यत् असन्देहार्थं तावदध्येयं व्याकरणं। प्रक्रियांशस्योपयोगविषये यदा वयं चिन्तयामः तदा बहुत्र सन्देहनिवारणायैव प्रक्रियांशस्य सुनिपुणमुपयोगो भवति। शब्दानां बहुष्वर्थेषु प्रयोगो भवति। तत्र कुत्र कस्मिन्नर्थे प्रयोगः कृतो विद्यते, अत्र बहुधा भवति विप्रतिपत्तिः। तत्र च कारणमिदं विद्यते यत् शास्त्राणि तावत् सूत्रमर्यादया लिखितानि विद्यन्ते। दर्शनानां मुख्यं प्रतिपाद्यं भवति आत्मा। अन्येषां तत्त्वानां ज्ञानं विज्ञानेन भवितुमर्हति किन्त्वात्मतत्त्वं नैव केनचिदन्येन शास्त्रेण ज्ञातुं शक्यते।

**आत्मपदार्थः**

आत्मपदार्थो दर्शनेषु विचारस्य केन्द्रे विद्यते। अत एव च दर्शनानि आत्मविद्येतिनाम्नापि प्रसिद्धानि सन्ति। किन्तु किन्तावदात्मा? किं तावदात्मनः स्वरूपम्? इति विषये यदि प्रश्नः क्रियते तर्हि भवति विप्रतिपत्तिः यत् कथं आत्मपदार्थनिर्णयः क्रियते? आत्मपदं कस्मिन्नर्थे प्रयुक्तं विद्यते, कस्तावदस्य पदस्याभिप्रायः?

[4] अष्टा. ६/१/८८

तत्र व्याकरणदर्शनस्य प्रक्रियैव शरणतया पुरस्तादायाति। अत्र चत्वारोऽर्थाः सम्भवन्ति इति कठोपनिषदो भाष्ये भगवता शङ्कराचार्येण सुनिपुणं निभालितं विद्यते। तच्च सर्वमपि व्याकरणशास्त्रमाधारीकृत्यैव प्रतिपाद्यते। शङ्कराचार्येण शाङ्करभाष्ये स्वकीयस्य सिद्धान्तस्य समर्थनाय व्याकरणस्य साहाय्यं गृह्यते। पाणिनीयव्याकरणानुसारमपि आत्मपदार्थस्तादृश एव स्वीकर्तव्य इति तेषामाशयः। सः वदति- "व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्तते। यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते॥ इत्यात्मशब्दव्युत्पत्तिस्मरणात्[5]।"

विद्यते हि तत्रानन्दगिरेः व्याख्या-"आप्लृ व्याप्ताविति धात्वार्थानुसारेण व्यापक आत्मशब्दार्थः। यद्यस्मादादत्ते संहरति स्वात्मन्येव सर्वमिति जगदुपादानं लभ्यते, विषयानत्तीत्यात्मेतिव्युत्पत्त्या स्वचैतन्यावभासेनोपलब्धृत्वमात्मशब्दार्थः। येन कारणेनास्यात्मनः सन्ततेः निरन्तरो भावः कल्पितस्याधिष्ठानसत्तामन्तरेण सत्ताभावाद्यथा रज्जवामध्यस्ते सर्पे रज्ज्वाः सातत्यं तथा कल्पितं सर्वं येन स्वस्वरूपवत्स आत्मेत्यर्थः[6]।"

व्युत्पत्त्या तावदस्मिन् विषये चत्वारो विकल्पाः समागताः। आत्मशब्दस्य व्युत्पत्तिश्चतुर्धा विवेक्तुं शक्यते। दार्शनिकाः एतेषु कञ्चन विकल्पं स्वीकृत्य आत्मपदार्थं निरूपयन्ति। यत्र हि कस्यचन विकल्पस्य संयोजनं भवति स एव आत्मेतिपदवाच्यो भवति। अत्र हि शङ्कराचार्येणाद्वैतदिशा व्याख्यातमिदम्। परन्त्विदं तावदन्यान्यदर्शनदिशापि व्याख्यातुं शक्यम्। य आप्नोति इति रीत्या आत्मपदार्थस्य विवेचनं क्रियते। व्यापकत्वं तावदात्मनः प्रायशः सर्वैरप्यास्तिकदर्शनैः स्वीक्रियते कानिचन विहाय। यश्चादत्ते य आदानं करोति स आत्मा इति रीत्या अपि आत्मपदार्थस्य विवेचनं कर्तुं शक्यते। यः विषयान् अत्ति, अदनं भोगः, यः विषयानामुपभोगं करोति, स आत्मा। आत्मनः स्वरूपविषये विवदन्ते विद्वांसो दार्शनिकाश्च। शरीरस्य विषये प्रोच्यते यत् शरीरं हि भोगायतनमिति नैयायिकाः। चार्वाकास्तु तद्विपरीतं ब्रुवते। ते हि शरीरमेवात्मेति वदन्ति, शरीरं नैव भोगायतनं किन्तु तदेव भोक्तृ इति तेषां मन्तव्यम्। परन्तु यथा विवेचनं व्याकरणशास्त्रेण कृतं विद्यते, तया रीत्या प्रायशः सर्वेऽपि दार्शनिकाः स्वीयं सिद्धान्तं स्वीकर्तुं शक्नुवन्ति। आत्मविषये न्यायचार्वाकयोर्विवादं दूरं स्थापयतो व्याकरणस्येदं मतं द्वाभ्यामपि स्वीकर्तुं शक्यते यत् आत्मा तावद् भोक्ता। यद्यपि साङ्ख्यादिभिः आत्मनः पुरुषस्य मुख्यभोक्तृत्वं नैव स्वीक्रियते तथापि मुख्यभोक्तृत्वानङ्गीकारेऽपि कथञ्चिद् गौणमेव भोक्तृत्वं पुरुषस्य तैरपि स्वीकर्तव्यमेव, अन्यथा मुमुक्षः कैवल्यार्थं

[5]कठ.भा. १/२/१

[6]कठ.आ. १/२/१-२

प्रवृतिरुपपादयितुमशक्या भविष्यति। तथाहि यः भोक्ता स एवात्मेति सिद्धान्ते विवादस्यावसरः स्वल्पतां गच्छति।

### विषयपदार्थः

तथैवापरं पदं भवति विषयः। कस्तावद् विषयः ? अत्रापि व्याकरणशास्त्रं दर्शनानां मार्गदर्शनं करोति। तत्र धातुर्भवति षिञ् बन्धने यः बध्नाति स विषयः। विषयाणां कार्यं भवति बन्धनम्। तथैव हि यत्र कुत्रचिदपि यानि कानिचन पदान्यागच्छन्ति येषां पदार्थानामर्थबोधो न जायते, तत्र व्याकरणशास्त्रमेव दर्शनशास्त्राणां सन्देहानां निवारणाय पुरस्तादायाति। दर्शनशास्त्रेषु बहुधा केचन तथांशाः अस्माकं पुरस्तात् समायान्ति यत्र सारल्येनार्थनिर्णयो नैव कर्तुं शक्यते। तत्र च व्याकरणदर्शनस्य मार्गदर्शनेन मार्गदर्शनं सम्यक्तया कर्तुं शक्यते। इदं हि तावत्केवलं निर्दशनम्। सन्ति तावद्भूयांस्युदाहरणानि।

### व्याकरणदर्शनम्

व्याकरणशास्त्रस्य यथा एका महत्त्वपूर्णा प्रक्रिया विद्यते तथैव व्याकरणशास्त्रस्य एकं सुप्रतिष्ठितं दर्शनमपि विद्यते। व्याकरणदर्शनस्य प्रवर्तको वाक्यपदीयकारो भर्तृहरिः स्वीक्रियते। परन्तु भर्तृहरिणा ये विचाराः कृताः सन्ति तेषां विचाराणां मूलं सूक्ष्मतया पाणिनीयसूत्रेषु पतञ्जलिना कृते महाभाष्ये च प्राप्तुं शक्यते। पातञ्जलं महाभाष्यमधिकृत्य भर्तृहरिणा दीपिकानाम्नी काचन गुरुत्वपूर्णा व्याख्यापि लिखिता विद्यते। भर्तृहरेः वाक्यपदीये प्रतिपादितः शब्दब्रह्माद्वयवादो[7] निश्चयेन महत्त्वपूर्णं दर्शनं विद्यते। अनन्तरं हि भगवत्पादशङ्कराचार्यस्य अद्वैतवेदान्तदर्शनं भर्तृहरेः दर्शनेन प्रभावितं विद्यते इत्यत्र नास्ति सन्देहलेशोऽपि। परन्तु दर्शनस्य ये विविधाः सिद्धान्ताः सन्ति तत्रापि पतञ्जलिना बहुधा मार्गदर्शनं विधातुं शक्यते। अत्र तु केवलं निर्दशनरूपेण केचन विषया एव समुल्लिख्यन्ते।

### किं तावत् नित्यत्वम्

नित्यविषये अवधारणा विद्यते। किं तावत् नित्यत्वम्? अत्र प्रश्ने 'सिद्धे शब्दार्थसम्बन्धे[8] 'इतिविषयमवलम्ब्य विचाराणां कर्तुं प्रवृत्तः भगवान् भाष्यकारः पतञ्जलिरवधारणाद्वयं प्रस्तौति - प्रथमावधारणा भवति नित्यत्वस्य यत् त-

[7]अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वा.प.ब्र. १)

[8]महा.पस्प. पृ.४७

देव नित्यं यत् कूटस्थमविचाल्यनपायमविकार्यनुपजातमिति। परन्तु तदनन्तरं पतञ्जलिर्वदति - "अथवा नेदमेव नित्यलक्षणं ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यम्' इति। तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते"[9] अनया रीत्या पतञ्जलिः नित्यत्वस्य द्विविधामवधारणां प्रस्तौति। साङ्ख्यदर्शनस्याध्येतारो जानन्ति यत् तत्रेदं द्वयमपि, नित्यत्वस्य द्वयी अवधारणा अपि लभ्यते। साङ्ख्यदर्शने पुरुषस्यापि नियत्वं स्वीक्रियते प्रकृतेरपि। परन्तु न द्वयोरेकविधमेव नित्यत्वं विद्यते। उभयत्र नित्यत्वस्य एकमेव लक्षणं नैव समन्वेतुं शक्यते। पुरुषस्य नित्यत्वमन्यत् प्रकृतेस्त्वन्यत्। यादृशं नित्यत्वं प्रकृतेर्विद्यते न तादृशं नित्यत्वं पुरुषस्य। पुरुषस्य पतञ्जलिप्रतिपादितदिशा प्रथमया रीत्या नित्यत्वं विद्यते यतो हि पुरुषो ध्रुवो भवति, कूटस्थो भवति, अविकारी भवति अनुपन्नश्च पुष्करपलाशवन्निर्लिप्तः। प्रकृतेस्तु नैतादृशं नित्यत्वं भवति। प्रकृतिर्हि प्रतिक्षणं परिणामिनी कथं हि ध्रुवा, कूटस्था, अविकारिणी भवेत्। नैतत् नित्यत्वलक्षणं प्रकृतौ शक्यते समन्वेतुम्। अत एव प्रकृतेर्हि द्वितीयं नित्यत्वं भवति। तथाहि तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते प्रकृतेर्हि परिणामिनित्यता भवति। प्रकृतेः सर्वदैव परिणामो भवति परन्तु परिणामे सञ्जातेपि तस्याः प्रकृतेः प्रकृतित्वं न विहन्यते। सा हि स्वभावान्न च्यवते। अत एव प्रकृतिरपि नित्या प्रोच्यते।

नित्यत्वस्य प्रथमैवावधारणा प्रायशः दर्शनेषु स्वीक्रियते। परन्तु विशिष्टाद्वैतवेदान्तादिषु दर्शनेषु द्विविधमप्येतन्नित्यत्वं स्वीक्रियते। बहुषु तु नित्यत्वस्य प्रथमलक्षणमेव स्वीकृतं तथाहि अद्वैतवेदान्तदर्शने तावदेकं ब्रह्मैव तत्त्वम्, तदतिरिक्तं सर्वमपि मिथ्या स्वीक्रियते। अद्वैतवेदान्तदर्शनं परिवर्तनशीलस्य तत्त्वस्य नित्यत्वं नैव स्वीकरोति, अत्र तस्य हि मिथ्यात्वमेव स्वीक्रियते। अत एव प्रकृतिरेवात्र मायापदेन प्रोच्यते। माया हि सदसद्भ्यामनिवर्चनीया, नैव सत् नैव चासत्। ब्रह्मैव केवलं सदिति तेषां मतम्। नित्यत्वस्य द्वितीयं लक्षणं केवलं साङ्ख्ययोगदर्शनाभ्यामेव स्वीक्रियते, न दर्शनान्तरेषु तत् स्वीकृतम्। न्यायवैशेषिकादिदर्शनेष्वपि नित्यत्वस्य प्रथममेव लक्षणं स्वीक्रियते, अत एव केवलमात्माकाशकालादीनां तत्त्वानां परिवर्तनरहितानामेव नित्यत्वमेतैः दर्शनैः स्वीक्रियते। प्रकृतेस्तु स्वीकार एव नास्ति।

### शब्दानां नित्यत्वं वाऽनित्यत्वं वा

शब्दानां नित्यत्वं वा अनित्यत्वं वेति विवादो दर्शनेषु प्रसिद्धो विद्यते। नैयायिकास्तावद् ब्रुवते शब्दा अनित्याः। मीमांसकास्तु शब्दस्य नित्यत्वं स्वीकुर्वन्ति।

---

[9] महा.पस्प. पृ.५३

अयमपि विवादो भगवता पतञ्जलिना विवेचितः। शब्दस्य नित्यत्वं वानित्यत्वमिति सन्देहः एव कुतः ? अत्र प्रदीपे प्रोच्यते अत्र हि तावद्विप्रतिपत्त्या संशयः, उभयथा सम्भवति। तत्र कारणमिदं यत् शब्दपदस्य बहुधा प्रयोगो भवति, कदाचित् ध्वनिं बोधयितुं 'शब्द' पदं प्रयुज्यते कदाचित्तु स्फोटेऽपि शब्दपदं प्रयुज्यते। ध्वनेस्तु न कश्चन नित्यत्वं स्वीकरोति, नैयायिकाः वैशिषिकाश्च ध्वनिभिन्नस्य शब्दस्य सत्तायां प्रमाणमेव नास्तीति वदन्तस्तस्य ध्वनेरेव शब्दत्वं स्वीकुर्वन्ति। वैयाकरणाः मीमांसकाश्च ध्वनिव्यङ्ग्यं स्फोटमेव शब्दतया व्यवहरन्ति। स्फोटस्य तु नास्त्यनित्यत्वम्। अतएव सन्देहः सम्भवति[10]। अतएव विनैव पूर्वाग्रहं निष्पक्षतया पतञ्जलिरुभयथापि व्याख्यानं करोति। तस्यायामाशयो विद्यते यत् उभयथा खलु लक्षणप्रवृत्त्या भाव्यम्। शब्दनित्यत्ववादी शब्दानित्यत्ववादी द्वावपि शब्दान् प्रयुञ्जेते। अतो नैतद्युक्तं यदेकस्य मते व्याख्यानं भवति, अपरस्य मते न भवति[11]।

### जातिर्नित्या वाऽनित्या वा

जातिविषये दर्शनेषु बहुधा विवादो भवति। नैयायिकाः मीमांसकास्तावद् ब्रुवते यत् जातिर्नित्या। केचन तु जातेरस्तित्वमेव न स्वीकुर्वन्ति। पतञ्जलिना जातेः स्वरूपविषये विचारः क्रियते। जातिर्नित्या वाऽनित्या इति प्रश्नो भवति। तत्र हि कः पदार्थः, जातिर्वा पदार्थः व्यक्तिर्वा, द्रव्यं वा गुणो वा इत्यादयो बहवो विषयाः भवन्ति[12]। तेपि पतञ्जलिना सुनिपुणं निभालिताः। मुख्यतया वक्तुं शक्यते यत् प्रश्नो भवति द्रव्यं वा पदार्थः आकृतिर्वा ? प्रायश एते सर्वे विषयाः दार्शनिकैरपि विचार्यन्ते। पतञ्जलिना सङ्क्षेपेणैतद्विषयिणी मुख्या समस्या समुस्थापिता विद्यते।

### परस्परं प्रभावः

व्याकरणदर्शनस्य यादृशः सिद्धान्तो विद्यते अद्वैतवादस्य, तथैव सिद्धान्तो विद्यते शङ्कराचार्यस्यापि। द्वाभ्यामपि अद्वैतमेव स्वीक्रियते। वाक्यपदीये भर्तृहरिणा तावत् शब्दाद्वयवादस्य प्रणयनं कृतं विद्यते। शङ्कराचार्यस्याद्वैतवादस्तावद् भर्तृहरिणा प्रस्तुताद्वैतवादात् काञ्चन छायां गृह्णाति। भर्तृहरिप्रणीतमिदमेव दर्शनं कालान्तरे काश्मीरशिवाद्वयवादनाम्नापि प्रसिद्धिं प्राप्नोति, नात्र विद्यते विदुषां

---

[10]विप्रतिपत्त्या संशयः। केचिद् ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः। अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति। वाक्यस्फोटमन्ये सङ्गिरन्ते। अन्ये तु ध्वनिरेव शब्दः स च कार्यः, तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते (महा.पस्प. पृ.४६)

[11]उभयथापि लक्षणं प्रवर्त्यमिति (महा.पस्प. पृ.४६)

[12]महा.पस्प. पृ.५२-५४

काचन विप्रतिपत्तिः। एवं दर्शनरीत्यापि व्याकरणदर्शनस्य महत्त्वं दर्शनान्तरेषु प्रभावश्च दरीदृश्यते।

**परिष्कारांशः**

व्याकरणदर्शने तावत् कश्चन परिष्कारांशोपि विद्यते। यथा हि प्रक्रियाग्रन्थे व्याकरणं सर्वाण्यपि दर्शनानि महदुपकरोति तथैव परिष्कारांशे व्याकरणदर्शनं दर्शनान्तराणि च सम्यक्तया नव्यन्यायस्तावद् उपकरोति। तत्रेदं कारणं विद्यते यत् यः परिष्कारांशो विद्यते सः नव्यन्यायस्य परिष्कारप्रक्रियां विना कदाचिदपि सफलीभवितुं नार्हति। नव्यन्यायस्य तत् वैशिष्ट्यं विद्यते यत् तत्र परिष्कारांशस्य महद्योगदानं विद्यते। परिष्काराणां कस्तावदुपयोगो विद्यते? अत्र हि सङ्क्षेपेण वक्तुं शक्यते यत् असन्देहार्थं परिष्कारांशस्य भवति तावदुपयोगः। अत एव वस्तुतः शास्त्रेषु न्यायदर्शने च प्राधान्येन परिष्कारप्रक्रिया प्रारब्धा। असन्देहस्तु न केवलं नव्यन्यायस्य परिष्कारप्रक्रियाया एव प्रयोजनं विद्यते किन्तु व्याकरणशास्त्रेपि तद् मुख्यप्रयोजनेष्वन्यतमं प्रयोजनं भवति। अत एव हि पतञ्जलिना पस्पशाह्निके प्रोक्तम् – "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्[13]।" यदि हि तत्र प्रयोजनपूर्णतार्थं नव्यन्यायस्य भूरिशः उपयोगः कर्तुं शक्यते तर्ह्यवश्यमेव सः करणीयः। अत एव परवर्तिभिः वैयाकरणैः नव्यन्यायस्य भूरिशः उपयोगः विहितः। ते एव वैयाकरणाः नव्यवैयाकरणनाम्ना प्रसिद्धाः सञ्जाताः। नागेशभट्टादयस्तावन् नव्यवैयाकरणे-ष्वन्यतमाः भवन्ति। इदानीमप्येषा प्रक्रिया प्रचलत्येव। विंशतिशताब्द्यां श्रीमद्भिः रामप्रसादत्रिपाठिमहोदयैः नव्यन्यायशैलीं समाश्रित्य सूत्राणामर्थविवेचनस्य का-चनापूर्वैव शैली आविष्कृता, यस्यां स्फुटता भवति, स्पष्टता भवति। अत एव दर्शनानां व्याकरणशास्त्रेण सह घनिष्ठः सम्बन्धो विद्यते नास्त्यत्र काचन संशीतिः।

**शब्दसंक्षेपः**

१. अष्टा. - अष्टाध्यायी
२. कठ.भा. - कठोपनिषद्भाष्यम्
३. कठ.आ. - कठोपनिषद् आनन्दगिरि टीका
४. महा.पस्प. - महाभाष्यम्, पस्पशाह्निकम्
५. वा.प.ब्र. - वाक्यपदीयम्, ब्रह्मकाण्डम्

[13] महा.पस्प. पृ.१७

**सन्दर्भग्रन्थसूची**

१. कठोपनिषत्, सम्पा. वैजनाथशर्मा, आनन्दाश्रममुद्रणालय, १९२५
२. पाणिनिविरिचता अष्टाध्यायी, परिष्कर्ता श्रीगोपालदत्तशास्त्री, सम्पा. श्रीगोपालदत्तपाण्डेयः, चौखम्बा सुरभारती प्रकाशन ग्रन्थमाला - १९, २०१७
३. पातञ्जलं महाभाष्यम्, प्रथमखण्डः, प्रथमपादः, नवाह्निकरूपं प्रदीपोद्योतसहितं, सम्पा. डॉ. बालशास्त्री, वाणी विलास प्रकाशन, वाराणसी, द्वि.सं, १९८८
४. वाक्यपदीयम्, ब्रह्मकाण्डम्, हरिवृषभकृतस्वोपज्ञवृत्त्या अम्बाकर्त्रीव्याख्यया च सहितम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १९८८



# वागर्थस्वरूपसम्बन्धविमर्शः

रामलखन पाण्डेयः

व्याकरणे वागिति शब्दपर्यायस्तस्मादेव वैयाकरणाः शाब्दिकाः कथ्यन्ते। शब्दाद्वैतवादिनस्ते केवलं शब्दस्यैव सत्तां स्वीकुर्वन्ति, अर्थस्य पृथक् सत्तां न स्वीकुर्वन्ति। अर्थस्तु तन्मतेन शब्दस्य विवर्तभूतो भवति। आवर्तबुद्बुदाख्याः जलविकाराः यथा जलपदार्थादभिन्नास्तथैव जगद्गतः घटपटाद्यर्थः शब्दादभिन्नः। तदेवं वेदान्तिनो वैयाकरणाश्च सर्वथा समानाः प्रतीयन्ते। वेदान्ते ब्रह्माद्वैतवादः व्याकरणं च शब्दब्रह्माद्वैतवादः। वेदान्तिनो यथा अखण्डेऽद्वैते शब्दब्रह्मणि विश्वसन्ति। इयान् पुनरत्र भेदो दृश्यते यद्वेदान्तिनो जगतः प्रतिपादनं मिथ्यात्वेन कुर्वन्ति, वैयाकरणाश्च जागतिकं सर्वं घटपटादिकं प्रक्रियागतत्वेन समर्थयन्ति। “अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[1]” अथवा “विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2]” इति भर्तृहरिणा यदुक्तं, तदर्थसंघटकं वचनं शब्दस्यैव वास्तविकीं सत्तामाविष्करोति, अर्थस्य च प्रक्रियागतत्वेन काल्पनिकीमेव सत्तामङ्गीकरोति। तस्मादेव वैयाकरणाः प्रच्छन्नवेदान्तिनः कथ्यन्ते। किन्तु वेदान्ते जगतः मिथ्यात्वेन जगद्ब्रह्मणोः पारस्परिकः सम्बन्धस्तथा नैव संघटते, यथा व्याकरणे प्रक्रियादशायां शब्दार्थयोः वाच्यवाचकभावसम्बन्धो विलोक्यते। यद्यपि उभयत्रापि अखण्डबुद्धिनिर्ग्राह्यता समाना, तथापि वेदान्तापेक्षया व्याकरणे व्यावहारिकता समुदारा सुव्यवस्थिता च प्रतिभाति। व्यवहारे वागेव वाचकतया परिणमते। शब्दस्तत्र वाचकः, अर्थश्च वाच्य इति।

अर्थस्तु केवलं शब्दसाधुत्वे प्रयुज्यमान इति शब्दार्थयोर्वाच्यवाचकभावसम्बन्धे सत्यपि शब्दस्यैव प्राधान्यं नार्थस्येति यदुच्यते तत्तु विवादास्पदम्। किमर्थं नार्थ एव प्रधानीभूतः शाब्दिकेन सहयोगेन स्वात्मानमाविष्कुर्यादिति विपरीतोक्तिस्तत्र दृश्यते। वस्तुतस्तु शब्दः अर्थस्य ज्ञानं जनयतीति शब्दस्य साधनत्वमर्थस्य च साध्यत्वमवलोक्यते। “शब्दः शरीरस्थानीयस्तदर्थश्चात्मस्थानीयः” इत्यपि कैश्चिदुच्यते। अतः शब्दार्थगतप्राधान्याप्राधान्यविवादं परिहृत्य साहित्यिकास्तत्र शब्दार्थयोः सहभावं स्वीकुर्वन्ति। शब्दार्थयोः सहभावे प्राधान्याप्राधान्यविवक्षा न भवति। शब्दार्थयोः सहभावे शब्दगतोऽर्थगतो वा पक्षपातः नैव सम्भवति।

शब्दैकपक्षपातिनो वैयाकरणाः शब्दस्य संस्कारे सर्वात्मना प्रयतन्ते, किन्त्वर्थस्य संस्कारं न जाने किमर्थं न सहन्ते। अथवा ते अर्थस्य संस्कारं बाह्यं मत्वा शब्दस्य संस्कारमेव ग्राह्यं मन्यन्ते। तदयं सांस्कारिकः कश्चिदभियोगो भामहेन शाब्दिकेषु काव्यालङ्कारे सुस्थापितः -

---

[1]वा.प.ब्र. १२३

[2]वा.प.ब्र. १

**रूपकादिमलङ्कारं बाह्यमाचक्षते परे।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥**
**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥**[3]

शब्दश्चार्थश्चेति द्वयमपि काव्येऽभीष्टम्। तेन हि शब्दसंस्कार इव अर्थसंस्कारोऽपि तत्र युज्यते। संस्कार एव काव्ये अलङ्कार इत्युच्यते। संस्कृतिरेव च काव्ये अलंकृतिरिति कथ्यते। किमर्थमेतादृशं पर्यायग्रहणमिति प्रश्नस्तत्र समुदेति। संस्कारे संस्कृतौ वा या पर्याप्तिर्नास्ति तामेव पर्याप्तिं तत्र साधयितुमलङ्कारोऽलङ्कृतिर्वेति प्रथितं प्रत्युत्तरमपि रमणीयमेव। अलङ्कारेऽलंकृतौ वा 'अल' मिति पदं पर्याप्तिपरेणार्थेन युज्यते। संस्कारालङ्कारयोर्मध्ये संस्कृत्यलंकृत्योर्मध्ये वा सामान्यविशेषभावोऽपि सुतरां सम्पद्यते। तदेवं व्याकरणगतं शब्दैकपक्षपातं परिहृत्य काव्ये शब्दार्थयोरुभयोरपि स्वरूपं लोकोत्तरेण सौन्दर्येण समृद्धं विधीयते।

अथ शब्दार्थयोर्मध्ये यः सम्बन्धः स सम्बन्ध एव शक्तिरिति कथ्यते। शक्तिं विना शब्दार्थयोर्वाच्यवाचकभावरूपः सम्बन्धो न सम्भवति। अथ च शब्दार्थयोर्मध्ये शब्दस्याभ्यर्हितत्वात् सा शक्तिः शब्दस्यैव स्वीक्रियते। सा च शब्दशक्तिः शब्दव्यापार इत्यप्युच्यते। शब्दशक्तिं शब्दव्यापारं वा वाच्यवाचकभावे व्यवस्थापयितुं तत्र संकेतग्रहः परमावश्यकः। अन्यथा येन केनापि शब्देन यस्य कस्यचिदप्यर्थस्य बोधो भविष्यति। "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्यस्ति संकेतग्रहस्य प्रकारः। स च संकेतः व्यक्तौ न भवति व्यक्तेरूपाधौ भवति। वैयाकरणास्तत्र जातिगुणक्रियायदृच्छासु संकेतं स्वीकुर्वन्ति, मीमांसकाश्च केवलं जातावेव संकेतं स्वीकुर्वन्ति। नैयायिका जातिगतपदार्थे बौद्धाश्च तद्भिन्नभिन्नत्वप्रकारके पदार्थे संकेतग्रहमामनन्ति। अथ च यस्य शब्दस्य यस्मिन्नर्थे साक्षात्संकेतो गृह्यते, स शब्दः तस्य वाच्यार्थस्य वाचको भवति। तदेवं काव्यप्रकाशे शब्दार्थयोर्वाच्यवाचकभावसम्बन्धः सम्पद्यते।

किन्तु न हि सर्वत्र शब्दार्थयोर्मध्ये वाच्यवाचकभावसम्बन्ध एव सम्भवति। कर्मणि कुशलः, गङ्गायां घोषः, उपकृतं बहु तत्र किमुच्यते, इत्यादिषु वाच्यार्थस्य मुख्यार्थस्य वा बाधे सति 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावा' दभिधायां च विरतायां तत्र तत्र लक्षणाव्यापारः प्रवर्तते, येन शब्दार्थयोर्मध्ये द्वितीयो लक्ष्यलक्षकभावसम्बन्धः समुद्भवति। अभिधाव्यापार इव लक्षणाव्यापारोऽपि यत्र न सम्भवति, तत्र व्यञ्जनाव्यापारेण तृतीयो व्यङ्ग्यव्यञ्जकभावसम्बन्धः शब्दार्थयोर्भवति। तदेवं त्रिविधेन शब्दव्यापारेण त्रिविध एव शब्दार्थयोर्बोध्यबोधकभावसम्बन्धो भवति।

[3]काव्या. १/१५

वस्तुतः शब्दार्थयोरुभयोरपि स्वरूपगतसम्बन्धं विमृश्यैव "नामरूपात्मकं जगदि"ति प्रसिद्धिरस्ति। वेदान्तदर्शने व्याकरणे शैवागमशास्त्रे वा यदेकत्वमद्वैतत्वं वा प्रतिपाद्यते तत्रापि द्वितीयस्य सत्तां निराकर्तुं न युज्यते। शैवशास्त्रे "सर्वं शिवमयं जगद्" इति यदुक्तं तच्छिवशक्त्योरेकत्वभावनयैव सम्भवति -

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शक्तिशक्तिमतोर्भेदः शैवे शास्त्रे न वर्तते॥**

तस्य शिवस्य पञ्च शक्तयः प्रधानीभूताः सन्ति-चित् शक्तिः, आनन्दशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिश्चेति। तत्र चितिशक्तिः प्रकाशस्वरूपा, आनन्दशक्तिः स्वातन्त्र्यस्वरूपिणी, इच्छाशक्तिश्चमत्कारपरा, ज्ञानशक्तिः शिवविमर्शपरा, क्रियाशक्तिश्च विश्वयोगसाधनपरा। तत्र च प्रथमा या शिवस्य चितिशक्तिः सा एव परा वागिति कथ्यते। परा वागेव च व्याकरणे वाग्ब्रह्मेति निगद्यते। वाचश्चत्वारो भेदाः व्याकरणे शैवशास्त्रे चापि सुप्रसिद्धा। तत्र प्रथमा परा वाक्, द्वितीया पश्यन्ती वाक्, तृतीया मध्यमा वाक्, चतुर्थी च वैखरी वाक्। परायां पश्यन्त्यां च वाचि शब्दार्थयोरभेदस्तिष्ठति। मध्यमायां वाचि तयोर्भेदस्तावदव्यक्तस्तिष्ठति। वैखर्यां वाचि शब्दार्थयोर्भेदः सुस्पष्टतया परिलक्ष्यते। अतः "व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम् " इति व्याकरणस्य या परिभाषा क्रियते, तत्र अर्थानपि व्याकृत्य शब्दाः व्युत्पाद्यन्ते इति शब्दार्थगतो विवेकः परिलक्ष्यते। अर्थस्तत्र यथा जागतिकः परमार्थिकश्चेति, तथैव शब्दोऽपि जागतिकः पारमार्थिकश्चेति स्वीकार्यः। तस्मादेव "नामरूपं व्याकरवाणि" इति केनचिदाचार्येण प्रोक्तम्।

ओंकारमेव पारमार्थिकं मत्वा मन्ये तदोङ्कारस्य ध्वनिमयत्वाच्छब्दमयत्वाद्वा शाब्दी कूटस्थता प्रदर्श्यते। किन्तु तदोङ्कारस्तु तस्य ब्रह्मणः वाचकः स्वीकृतः "ओङ्कारस्तस्य वाचकः" इति। वाचकस्यैव केवलं पारमार्थिकता स्वीकर्तुं नैव युज्यते। तत्र वाचके वाच्यस्यस्यापि स्वरूपं नूनमाविर्भवति, तस्मादेव तदोङ्कारस्य पारमार्थिकता सिध्यति। एवमेव परस्यां वाचि परमार्थः कश्चन यदि सन्निहितो नास्ति, परा वागपि वाग्ब्रह्मतयाभिधातुं न शक्यते। तेन शब्दार्थयोः साहित्यं तत्रापि स्वीकार्यमेव।

यथोक्तं प्राक् व्याकरणे न केवलं शब्दा एव व्याक्रियमाणाः भवन्ति, अपितु तदर्थानामपि व्याकृतिस्तत्र भवत्येव। अतः सर्वं शब्दमयं जगदिति नोक्त्वा शब्दार्थमयं जगदित्युच्यते। जगतश्च यौ मातापितरौ पार्वतीपरमेश्वरौ --- शब्दार्थाविव परस्परं सम्पृक्तौ शब्दार्थप्रतिपत्तिप्रयोजकौ समाम्नातौ -

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥**[4]

**शब्दसंक्षेपः**

१. काव्या. - काव्यालङ्कारः
२. रघु. - रघुवंशम्
३. वा.प.ब्र. - वाक्यपदीयम् (ब्रह्मकाण्डम्)

**सन्दर्भग्रन्थसूची**

१. काव्यालङ्कार, सम्पा. शङ्कर राम शास्त्री, श्री बालमनोरमा प्रेस, मद्रास, १९५६
२. रघुवंशम्, सम्पा. खेमराज श्रीकृष्णदास, श्रीवेङ्कटेश्वर प्रेस, बंबई, १८२९ शके
३. वाक्यपदीयम् (ब्रह्मकाण्डम्), अम्बाकर्त्रीव्याख्यया च सहितम्, संपूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १९८८



[4]रघु. १/१

# मौनिश्रीकृष्णभट्टविरचितशब्दार्थतर्कामृतग्रन्थदृष्ट्या अनुमानप्रमाणविमर्शः

गोविन्दशुक्लः

## 1. प्रस्तावना -

शब्दार्थतर्कामृते मौनिश्रीकृष्णभट्टः तार्किकसिद्धान्तान् विखण्ड्य व्याकरण-दर्शनदृष्ट्या प्रमाणप्रमेयविषयकान् सिद्धान्तान् विचारयति तत्र च प्रमाणविचारप्रसङ्गे प्रत्यक्षाऽनुमानोपमानशब्दप्रमाणानां विचारमकरोत्। प्रत्यक्षप्रमाणविचारप्रसङ्ग एव पदार्थानामपि चर्चामकरोत्। अस्मिन् शोधपत्रे अनुमानप्रमाणमाश्रित्य विचारः विधास्यते। शब्दार्थतर्कामृते अनुमानप्रमाणविचारक्रमे आदौ मौनिश्रीकृष्णभट्टेन तार्किकसिद्धान्ताः विवेचिताः, तदनन्तरं तान् तार्किकसिद्धान्तान् विखण्ड्य शाब्दिकसिद्धान्तेषु विचारः कृतः। अतः पूर्वं शब्दार्थतर्कामृते प्रतिपादितान् तार्किकसिद्धान्तान् अनुशील्य यथाक्रमं शाब्दिकसिद्धान्ताः विचारयिष्यन्ते। तत्र च आदौ मौनिश्रीकृष्णभट्टेन तार्किकैरङ्गीकृता अनुमितित्वजातिः खण्डिता तथा च 'सङ्केतविशेषसम्बन्धेन परामर्शव्यापारकलिङ्गज्ञानजन्यज्ञानवृत्ति अनु पश्चात् मितिरिति व्युत्पत्त्याऽवयवार्थानुसन्धानपूर्वकपङ्कजादिवत् योगिरूढोऽनुमितिश-ब्दः' साधितः। अनन्तरं केवलान्वयि अनुमानं खण्डयन् गदति- घटोऽभिधेयो प्रमेयत्वादिति अभिधेयरूपसाध्यस्य निश्चयसत्त्वेन अत्यन्ताभावाप्रतियोगित्वेन केवलान्वयित्वे व्यतिरेककोटेरभावात् साध्यनिश्चयाभावाधिकरणत्वरूपपक्षताया अभावान्न केवलान्वयिसाध्यकानुमानम्। तदन्तरं सिषाधयिषाविरहविशिष्टेति पक्षतालक्षणघटकाभावप्रतियोगिसिद्धिविशेषणस्य शाब्दिकानभिमतत्वं निरूप-यति। अनन्तरं व्यतिरेकाऽनुमानमपि खण्डयति। तत्र च 'पृथिवी इतरेभ्यो भिद्यते' इत्यादिषु व्यतिरेकानुमानस्थलेषु घटो न जलमितिवत् इतरभेदस्य प्रत्यक्षसिद्धत्वात् नाऽनुमितेः प्रसङ्गः। तथा च व्यतिरेकाऽनुमाने आपतितानन्यान् दोषान् निवार्य व्यतिरेकाऽनुमानं खण्डितं मौनिश्रीकृष्णभट्टेन। अनन्तरमन्वयव्यतिरेकविशिष्टं 'पर्वतो वह्निमान् धूमात्' इत्याकारकमनुमानमपि खण्डितम्। यथा चन्दनस्य लौकिकं प्रत्यक्षं सौरभांशस्य च उपनीतभानात्मकमलौकिकं प्रत्यक्षं भवति तथैव धर्मांशे लौकिकप्रत्यक्षं वह्न्यंशेऽलौकिकभानात्मेव उभयोः तुल्यत्वात्। एवं विधः अनुमानं सर्वथा खण्डितम्। अनन्तरं तार्किकैः विचारितायां हेत्वाभासविचारणायां बहुधा दोषान् प्रदर्श खण्डनं कृतं तथा च उपाधेः यत् त्रैविध्यं तार्किकैः कथितं तदपि खण्डयित्वा तस्य चातुर्विध्यं न्यरूपि[1]।

[1]शब्द.त.अनु. पृ.५३-६३

## 2. शब्दार्थतर्कामृते अनुमानप्रमाणे विवेचितानां तार्किकसिद्धान्तानामनुशीलनम् -

अनुमितिकरणम् अनुमानम्। अत्र का नाम अनुमितिः प्रमा? सकलाऽनुमितिनिष्ठमेकमनुमितित्वं जातिः, तज्जात्यवच्छिन्ना अनुमितिः। सा च अनुमितित्वजातिः अनुमिनोमीत्यनुव्यवसायसिद्धा। अनुमितिप्रमायां हेतुज्ञानम् करणम्, परामर्शो व्यापारः। स च व्यापारः **'तज्जन्यत्वे सति तज्जन्यजनकरूपः'**। यथा कुठारेण छिदा क्रियते चेत् कुठारः छिदारूपफलं प्रति करणम्। व्यक्तिद्वारा कुठारे क्रिया भवति तया क्रियया कुठारस्य यूपेन सह संयोगे सति छिदारूपफलं निष्पद्यते। अत्र कुठारयूपयोः यः संयोगः सः कुठारजन्यः एवञ्च कुठारेण जन्यं यत् छिदारूपं फलं तस्य जनकः, अतः कुठारजन्यत्वं संयोगे एवञ्च कुठारजन्यछिदारूपफलस्य जनकताऽपि संयोगे चेत् संयोगः व्यापारः। तथैव अनुमितिप्रमास्थलेऽपि परामर्शो व्यापारः वर्तते। अनुमितिं प्रति परामर्शस्य व्यापारवत्ता कथं सिद्ध्यति इति ज्ञानाय परामर्शस्य स्वरूपज्ञानमावश्यकम्। अत एव आदौ परामर्शस्य स्वरूपविषये विचारः क्रियते।

**'व्याप्तिविशिष्टपक्षधर्मतायाः ज्ञानं'** परामर्शः। व्याप्तिः लिङ्गलिङ्गिनोः सहचारज्ञानम्। यथा- 'पर्वतो वह्निमान् धूमात्' इत्यत्र लिङ्गं धूमः, लिङ्गी वह्निः तयोः महानसादौ सहचारज्ञानं व्याप्तिः। इयं व्याप्तिः अन्वयव्यतिरेकभेदेन द्विविधा।

### अन्वयव्याप्तिः -

**साध्यव्यापकहेतुसामानाधिकरण्यम्** अन्वयव्याप्तिः। यथा - यत्र यत्र धूमः तत्र तत्र वह्निरिति। अन्वयव्याप्तौ यः व्याप्यः तस्य पूर्वमुल्लेखः क्रियते एवञ्च यः व्यापकः तस्य अनन्तरम्। अस्याः अन्वयव्याप्तेः पञ्चविधलक्षणानि गङ्गेशापाध्यायः चिन्तामणौ विचारयामस। तेषु प्रथमं लक्षणं **साध्याभाववदवृत्तित्वम्**। यथा **'पर्वतो वह्निमान् धूमाद्'** इत्यत्र साध्यः वह्निः, साध्याभावान् जलह्रदः तदवृत्तित्ता धूमे। अतः वह्नेः व्याप्तिः धूमे[2] वर्तते। द्वितीयं लक्षणं - **साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्**। साध्यः वह्निः साध्यवान् पर्वतः तद्भिन्नसाध्याभाववान् जलह्रदः तदवृत्तित्ता धूमे। तृतीयं लक्षणं - **साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्**।

---

[2]अत्रेदमवश्यमवधेयं यत् वह्नेः व्याप्तिः धूमे वर्तते यतोहि यत्र वह्निः तत्र धूमः अवश्यमेव वर्तते एवञ्च यत्र वह्नेरभावः तत्र धूमस्यापि अभावः वर्तते। किञ्च न धूमस्य व्याप्तिः वह्नौ, तप्तपिण्डे अयसि वह्निसत्त्वेऽपि तत्र धूमस्याभावात्। अतः वह्निसद्भावेऽपि धूमस्य तत्र विद्यमानता नास्ति। एतेन सिद्ध्यति धूमः वह्निं विना न तिष्ठति परञ्च वह्निस्तु धूमं विनाऽपि अयोगोलकादौ वर्तते। अत एव धूमापेक्षया वह्नेः अधिकदेशवृत्तित्वेन वह्निः धूमापेक्षया व्यापकः एवञ्च धूमः वह्न्यपेक्षया न्यूनदेशवृत्तित्वात् व्याप्यः। अतः धूमनिष्ठव्यापकतानिरूपितव्यापकतावान् वह्निः वर्तते अतः वह्नेः व्याप्तिः धूमे सिद्ध्यति किञ्च धूमस्य व्याप्तिः वह्नौ नास्ति।

साध्यः वह्निः, साध्यवान् पर्वतः तत्प्रतियोगिकान्योन्याभावाऽसमानाधिकरणः धूमः, सामानाधिकरण्यं धूमहेतौ। चतुर्थं लक्षणं - **सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्**। साध्यः वह्निः तदभाववत्सु सकलाऽधिकरणेषु विद्यमानः योऽभावः तस्य प्रतियोगी धूमहेतुः, प्रतियोगिता धूमहेतौ। पञ्चमं लक्षणं - **साध्यवदन्यावृत्तित्वम्**। साध्यः वह्निः तदवान् पर्वतः तदन्यः जलह्रदादयः तदवृत्तिः धूमः, अवृत्तित्वम् धूमहेतौ[3]।

अन्वयव्याप्तेः एतेषां पञ्चविधलक्षणानां **'इदं वाच्यं ज्ञेयत्वात्'** इत्यत्र अव्याप्तिः प्रसङ्गः। यतोहि यत् साध्यं **'वाच्यत्वं'** तस्य कुत्रापि अभावः नाऽस्ति केवलान्वयित्वात्। अस्य अयमाशयः जगति यावन्तः पदार्थाः वर्तन्ते सर्वे वाच्या एव। अतः कस्मिञ्चिद् पदार्थे वाच्यत्वस्य अभावे साध्यवदन्यः न कोऽपि पदार्थः लभ्यते। अतः अन्वयव्याप्तौ अव्याप्तिदोषः सुस्थिरः। तथोक्तम् - **सर्वाण्येव लक्षणानि केवलान्वय्यव्याप्या दूषयति केवलान्वयिन्यभावादिति। पञ्चानामेव लक्षणानामिदं वाच्यं ज्ञेयत्वादित्यादिव्याप्यवृत्तिकेवलान्वयिसाध्यके द्वितीयादिलक्षणचतुष्टस्य तु कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिसाध्यकेऽपि चाभावादित्यर्थः**[4]।

अन्वयव्याप्तेः लक्षणानाम् **'इदं वाच्यं ज्ञेयत्वात्'** इत्यत्र अव्याप्तिप्रसङ्गत्वात् सिद्धान्तलक्षणस्य आरम्भः कृतः। तस्य सिद्धान्तव्याप्तेः लक्षणम् - **हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यमिति**। यथा **'पर्वतः वह्निमान् धूमात्'** इत्यत्र हेतुः धूमः तस्य अधिकरणं पर्वतः वर्तते तस्मिन् धूमाधिकरणे पर्वते अत्यन्ताभावः घटादीनामत्यन्ताभावः तस्य अभावस्य प्रतियोगिनः घटादयः अप्रतियोगिसाध्यः वह्निः तत्समानाधिकरणः हेतुः धूमः, सामानाधिकरण्यं धूमहेतौ। अतः वह्नेः व्याप्तिः धूमहेतौ विद्यमानत्वात् भवति लक्षणसमन्वयः। एवमेव **'इदं वाच्यं ज्ञेयत्वात्'** इत्यत्रापि लक्षणसमन्वयः भवति। अत्र हेतुः ज्ञेयः तस्य अधिकरणं इदन्त्वावच्छिन्नपदार्थः तस्मिन् अत्यन्ताभावः घटाद्यन्ताभावः तस्य प्रतियोगी घटादयः अप्रतियोगिसाध्यं वाच्यत्वं तत्समानाधिकरणः हेतुः ज्ञेयत्वहेतुः, सामानाधिकरण्यं ज्ञेयत्वहेतौ, अतः भवति लक्षणसमन्वयः।

किञ्च अस्य सिद्धान्तलक्षणस्य **'संयोगवान् द्रव्यत्वात्'** इत्यत्राऽव्याप्तिप्रसङ्गः। यतोहि हेतुः द्रव्यं तदधिकरणं घटादयः तस्मिन् अत्यन्ताभावः संयोगाभावः। अतः यः साध्यः सः प्रतियोगी एव न तु अप्रतियोगसाध्यः, अतः लक्षणस्य प्रसक्तत्वात् भवति अव्याप्तिः। तद्वारणाय **'प्रतियोगिव्यधिकरणमि'**ति विशेषणं देयम्।

[3]तत्त्व.चि.अनु. पृ.२७-३१

[4]मा.व्या.पञ्च. पृ.१०१

एतेन लक्षणस्य स्वरूपं भवति - **प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ता-भावाप्रतियोगिसाध्यसामानाधिकरण्यमिति**[5], अतः नास्ति अव्याप्तिः[6]।

यत्र हेतुना साध्यस्य सिद्धिः क्रियते सः पक्षः। यथा कश्चित् पुरुषः कस्मिञ्चित् पर्वते धूमम् अपश्यत् किञ्च वह्निः न दृष्टः चेद् सः पर्वते धूमं दृष्ट्वा विचारयति यदि अस्मिन् पर्वते धूमः वर्तते चेद् वह्निरपि अवश्यं स्यात्। यतोहि यत्र महानसादौ धूमः दृश्यते तत्र वह्निरपि दृश्यते। अतः अत्रापि पर्वते धूमश्चेदवश्यं वह्निरपि स्यादिति इति व्याप्तिं स्मृत्वा पर्वते वह्निं निश्चेतुं यतते। अत्र धूमस्तु प्रत्यक्षसिद्धः तेन वह्नेः सिद्धिः क्रियते चेत् धूमः साधकः (हेतुः) एवञ्च वह्निः साध्यः, तस्य साध्यस्य वह्नेरधिकरणं पर्वतः पक्षः, पक्षता पर्वते। तस्माद् **'वह्निव्याप्यधूमवान् पर्वतः इत्याकारकं'** यत् व्याप्तिविशिष्टपक्षधर्मतायाः ज्ञानं सः परामर्शः। अयं परामर्शः व्याप्तिज्ञानजन्यम् एवञ्च व्याप्तिज्ञानजन्या या अनुमितिः तस्या जनकः अतः व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यायाः अनुमितेः जनकत्वात् परामर्शः व्यापारः।

अनुमितौ आदौ पक्षे धूमादिलिङ्गदर्शनं भवति। तदनन्तरं महानसादौ धूमवह्नौ दृष्ट्वा तयोः सामानाधिकरणत्वज्ञानात् धूमः वह्निव्याप्य इति अनुभवात्मकं (व्याप्तेः) ज्ञानं जातम्, तस्य स्मरणं जायते। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति तृतीयलिङ्गपरामर्शः। तदनन्तरं पक्षस्य ज्ञानसहितेन अयं पर्वतः वह्निमान् इति अनुमितिः उत्पद्यते। इदञ्चानुमानं द्विविधम् - **स्वार्थानुमानं परार्थानुमानञ्चेति**।

यत्र धूमादिलिङ्गेन स्वीयम् अनुमानं क्रियते, तत् स्वार्थानुमानम्। यथा कश्चित् पुरुषः पर्वतसमीपं गत्वा धूमलिङ्गं दृष्ट्वा अनुमिनोति अयं पर्वतः वह्निमान् इति। यत्र अन्यस्मै अनुमितिं कारयितुं प्रवर्तते तत्परार्थानुमानमुच्यते। अस्मिन् परार्थाऽनुमाने पञ्चविधवाक्यानि प्रयुज्यन्ते। इमानि पञ्चवाक्यानि न्यायशास्त्रे 'पञ्चाऽवयवा' इति नाम्ना प्रथितानि सन्ति। ते पञ्चाऽवयवाः - **प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि** वर्तन्ते। इदानीम् एतेषां पञ्चावयवानां स्वरूपं विचार्यते।

**प्रतिज्ञा** -

अनुमानवाक्ये येन साध्यस्य उपपादनं क्रियते सा प्रतिज्ञा। तथोक्तं न्यायसूत्रे - **साध्यनिर्देशः प्रतिज्ञा**[7]। तथा च वात्स्यायनभाष्ये **प्रज्ञापनीयेन धर्मेण धर्मि-**

---

[5]प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः। (तत्त्व.चिन्ता. पृ.१००)

[6]शब्द.त. १६/१, पृ.५३

[7]न्या.सू. १/१/३३

**णोः विशिष्टस्य परिग्रहवचनं प्रतिज्ञा**[8] इति। प्रज्ञापनीय इत्यस्य साधनीय इत्यर्थः, तथाहि साधनीयधर्मेण सह धर्मिणः बोधकं वाक्यं प्रतिज्ञा उच्यते यथा 'पर्वतः वह्निमान्'। अत्र साधनीयो धर्मः वह्निमत्त्वं तद्धर्मेण सह धर्मी पर्वतः तद्विशिष्टं वाक्यं 'पर्वतः वह्निमान्' इति प्रतिज्ञावाक्यम्।

किञ्च गङ्गेशापाध्यायेन 'साध्यनिर्देशः प्रतिज्ञा' इति सूत्रकारस्य लक्षणे न्यूनतां प्रकटीकुर्वता उच्यते यदि केवलं साध्यनिर्देशमात्रं प्रतिज्ञावाक्यं स्यात् चेत् येन पदेन साध्यस्य वह्नेः निर्देशः क्रियते, तस्मिन् साध्यपदे प्रतिज्ञालक्षणस्य अतिव्याप्तिप्रसङ्गः स्यात्। तदतिव्याप्तिवारणाय प्रतिज्ञायाः स्वरूपं परिष्कुर्वन् चिन्तामणौ गङ्गेशः प्रतिपादयति - **तत्र प्रतिज्ञा न साध्यनिर्देशः साध्यपदेऽतिव्याप्तेः किन्तूद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यमिति**[9]। यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र परप्रत्ययनार्थं प्रयुक्तेषु पञ्चसु अवयवेषु 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यम्। प्रकृतानुमाने 'पर्वतो वह्निमान्' इत्याकारिका अनुमितिः जायते। अत्र उद्देश्यभूतानुमितेः सदृशम् अन्यूनानतिरिक्तविषयकशाब्दबोधस्य जनकमिदं पर्वतो वह्निमानिति प्रतिज्ञावाक्यम्। अत एव उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं 'पर्वतो वह्निमान्' इति वाक्यम् उद्देशानुमितेः कारणीभूतं लिङ्गपरामर्शं प्रति प्रयोजकीभूतस्य वाक्यार्थस्यापि जनकं वर्तते यतोहि अस्य वाक्यघटितन्यायस्य प्रयोगे सति तेन सहैव लिङ्गपरामर्शं प्रति कारणीभूतस्य वाक्यार्थज्ञानस्योत्पत्तिर्जायते। एतेन प्रतिज्ञालक्षणे यः अतिव्याप्तिप्रसङ्गः सः वारितः।

**हेतुः** -

**उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः**[10] तथा **वैधर्म्यादि**ति[11]। उदाहरणस्य साधर्म्यात् साध्यस्य साधनम् एवञ्च उदाहरणस्य वैधर्म्यात् साध्यस्य साधनं हेतुः उच्यते। यथा 'धूमात्' इति। महानसादिषु धूमस्य सद्भावे वह्नेरपि विद्यमानता वर्तते अतः महानसादिसाधर्म्यात् वह्नेः साधकत्वात् अयं धूमहेतुः साधर्म्यात् साध्यसाधनहेतोरुदाहरणम् एवञ्च जलह्रदादिषु यत्र वह्नेरभावः तत्र धूमस्यापि अभावः भवत्येव अतः वैधर्म्यात् वह्निरूपसाध्यस्य अनुमापकत्वात् अयं धूमहेतुः वैधर्म्यात् साध्यसाधनहेतोऽपि उदाहरणम्। एतेन महानसादीनां साधर्म्यात्, ह्रदादीनां वैधर्म्याच्च धूमहेतुः वह्नेः साधकः। स्पष्टीकृतञ्चैतद् वात्स्यायनेन- उदाहरणेन

[8]वा.भा. १/१/३३, प१.५२

[9]तत्त्व.चि.अनु. पृ.७०५

[10]न्या.सू. १/१/३४

[11]न्या.सू. १/१/३५

सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनहेतुः साध्ये प्रतिसंधाय धर्ममुदाहरणे च प्रतिसन्धाय तस्य साधनतावचनं हेतुः एवञ्च उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुरिति[12]।

**उदाहरणम् -**

साध्यस्य साधर्म्यात् साध्यस्य ये धर्माः वर्तन्ते ते धर्माः यस्मिन् विद्यन्ते एतादृशः दृष्टान्तः उदाहरणम्[13] उच्यते एवञ्च साधर्म्यदृष्टान्तस्य विरुद्धधर्मविशिष्टं दृष्टान्तवचनमपि उदाहरणमुच्यते[14]। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः[15]। अस्य अयमाशयः आपामराणां लौकिकानाम् एवञ्च प्रत्यक्षादिप्रमाणैः अर्थनिर्णायकानां परीक्षकाणां यस्मिन् ज्ञाने सामाना बुद्धिः स्यात् सः दृष्टान्तः अर्थात् आपामरैः यथा वस्तुनः स्वरूपं बुद्ध्यते तथैव प्रमाणज्ञैरपि तस्य वस्तुनः स्वरूपं ज्ञायेत चेत् सोऽर्थो दृष्टान्तः[16]। अत्र वह्नेः सिद्धये प्रयुक्तस्य धूमहेतोः महानसः ह्रदश्चेति द्विविधम् उदाहरणं वर्तते। महानसे साध्यसाधनवह्निधूमयोः सहचारः, अतः महानसः साधर्म्यस्योदाहरणम्[17] एवञ्च ह्रदि साध्यसाधनवह्नि-धूमयोः सहचाराऽभावदर्शनात् ह्रदः वैधर्म्यस्योदाहरणं वर्तते[18]। अनया रीत्या साधर्म्यवैधर्म्ययोः उदाहरणानि प्रयुज्यन्ते। गङ्गेशोपाध्यायः उदाहरणस्य लक्षणमेव प्रतिपादयति - **अनुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभि-मतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम्**[19]। अस्य अयमर्थः अनुमितिं प्रति कारणीभूतलिङ्गपरामर्शस्य बोधकेभ्यः वाक्येभ्यः जन्यं यज्ज्ञानं तस्य जनकः यः व्याप्यत्वेनाभिमतवति विद्यमाननियतव्यापकत्वाभि-मतस्य सम्बन्धः, तस्य सम्बन्धस्य बोधजनकः यः शब्दो तदुदाहरणम्। परामर्शः अनुमितिं प्रति कारणं भवति एवञ्च परामर्शस्य बोधकं वाक्यम् उपनयवाक्यम्, उपनयवाक्येन जन्यं यज्ज्ञानं, तस्य जनकं व्याप्यत्वेनाभिमतहेतौ विद्यमानः नियतव्यापकत्वाभिमतः साध्यस्य सम्बन्धः, तस्य सम्बन्धस्य बोधजनकः शब्दः

[12]वा.भा. पृ.५३

[13]साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। न्या.सू.१/१/३६

[14]तद्विपर्ययाद्वा विपरीतम्। न्या.सू. १/१/३७

[15]न्या.सू. १/१/२५

[16]लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनायिकं बुद्ध्यतिशयमप्राप्ताः, तद्विपरीताः परीक्षका-स्तर्केण प्रमाणैरर्थं परीक्षितुर्हन्तीति। यथा लौकिका बुध्यन्ते यथा परीक्षका अपि सोऽर्थो दृष्टान्तः। (वा.भा. पृ.४६)

[17]यो यो धूमवान् स वह्निमान् यथा महानसमिति

[18]यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभावः, जलह्रदः

[19]तत्त्व.चि.अनु. पृ.७४०

उदाहरणवाक्यम्। यथा **'पर्वतो वह्निमान्'** इति अनुमितेः कारणीभूतः **'पर्वतो वह्निव्याप्यधूमवान्'** इति परामर्शः। अस्य परामर्शस्य बोधकं वाक्यं 'वह्निव्याप्यधूमवांश्चायम्' इति उपनयवाक्यम्। अस्मादुपनयवाक्यात् जन्यज्ञानस्य जनकः व्याप्यत्वेनाभिमतः यः धूमः तस्य धूमवति महानसे विद्यमानस्य व्यापकत्वाभिमतस्य वह्नेः यः सम्बन्धः, तस्य सम्बन्धस्य बोधकं 'महानसम्' इति शब्द उदाहरणवाक्यम्।

**उपनयः** -

उदाहरणाऽपेक्षया क्रियमाणः 'तथा चाऽयम् न तथा वा' इत्यनेन साध्यस्य उपसंहार एव उपनय उच्यते। 'तथा चाऽयम्' इत्यस्य अयमाशयः- अयमपि दृष्टान्तवत् साध्यव्याप्यहेतुमान् वर्तते एवमेव 'न चाऽयं तथा' इत्यस्य अयं वैधर्म्यदृष्टान्तवत् साध्याभावव्यापकीभूताऽभावप्रतियोगिमान् इत्याशयः। एवंविधः द्विविधप्रकारीयोपनयवाक्यस्य लक्षणम् **उदाहरणापेक्षस्तथेत्युसंहारो न तथेति वा साध्यस्योपनयः**[20] इति सूत्रेण महर्षिः गौतमः विवृणुते। अस्य व्याख्यां कुर्वन् भाष्यकारः गदति उपसंहारः उदाहरणापेक्षितः भवति अर्थात् उदाहरणानुगुणमेव उपसंहारवाक्यं स्यात्। दृष्टान्ते साध्यसाधनयोः व्याप्तिः यथा गृह्यते तथाविधव्याप्तेः उपसंहारः उपनयवाक्येन भवति[21]।

यो यो धूमवान् स वह्निमान् इति साधर्म्यविशिष्टस्योदाहरणं प्रयुज्यते तदा 'तथा चाऽयम्' इति साधर्म्याऽधारितं उपनयवाक्यं भवति। अर्थात् वह्निव्याप्यधूमवांश्चायम् इति उदाहरणवाक्येन धूमे वह्नेः व्याप्तिः प्रतिपाद्यते। यदि **'यो यो न वह्निमान् स न धूमवान्'** इति वैधर्म्यविशिष्टं उदाहरणवाक्यं प्रयुज्यते तदा **'न चाऽयं तथा'** एतादृशं वैधर्म्याऽऽधारितम् उपनयवाक्यम्। अर्थात् पर्वतो न वह्न्यभावव्यापकीभूतधूमाऽभाववान् इति उदाहरणवाक्येन वह्न्यभावे धूमाभावस्य व्याप्तिः प्रतिपाद्यते।

गङ्गेशोपाध्यायेन उपनयवाक्यस्य लक्षणं प्रतिपादयता उक्तम् - **अनुमितिकारणतृतीयलिङ्गपरामर्शजनकाऽवयवत्वमुपनयत्वमिति सामान्यलक्षणम्**[22]। परार्थानुमाने यावन्ति अवयववाक्यानि प्रयुज्यन्ते तेषु उपनयवाक्यं साक्षात् लिङ्गपरामर्शस्य जनको भवति, यतोहि लिङ्गपरामर्शविषय एव उपनयवाक्य-

[20]न्या.सू.१/१/३८

[21]उदाहरणापेक्ष उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्ययुक्त उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। साध्यवैधर्म्ययुक्ते पुनरुदाहरण आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इति। (वा.भा. पृ.५६)

[22]तत्त्व.चि.अनु. पृ.७४९

स्य विषयः। अत्र इदं ज्ञातव्यं यत् परामर्शस्य स्वरूपं द्विविधं भवति एकः **'वह्निव्याप्यधूमवान् पर्वत'** इत्याकारकः अन्वयपरामर्शः। द्वितीयः **'पर्वतो वह्न्यभावव्यापकीभूतधूमाभावप्रतियोगिमान्'** इत्याकारकः व्यतिरेकपरामर्शः। यदि साधर्म्याऽधारितोदाहरणोपनयवाक्ययोः प्रयोगः क्रियते तदा वह्निव्याप्यधूमवान् पर्वत इति अन्वयपरामर्शस्य जनकम् उपनयवाक्यं भवति। यदि वैधर्म्याधारितोदाहरणोपनयवाक्ययोः प्रयोगः क्रियते तदा **'पर्वतो वह्न्यभावव्यापकीभूतधूमाभावप्रतियोगिमान्'** इति व्यतिरेकपरामर्शस्य जनकं उपनयवाक्यं भवति।

### निगमनम् -

**'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्**[23]' इति निगमनस्य लक्षणं महर्षिगौतमेन समुद्घोषितम्। यथा 'पर्वतो वह्निमान् धूमात्' इत्यस्मिन् अनुमानप्रयोगे पर्वतो वह्निमान् इत्याकारकं प्रतिज्ञावचनं वर्तते। हेतोः अपदेशात् "वह्निव्याप्यधूमवत्त्वात् पर्वतो वह्निमान्' इति वाक्येन प्रतिज्ञायाः पुनरुपदेशो भवति। प्रतिज्ञायां हेत्वपदेशात् **'वह्निव्याप्यधूमवत्त्वात् पर्वतो वह्निमान्'** इति निगमनवाक्यम्। अत्रेदं ध्येयं यत् प्रतिज्ञायां न हेतोः निर्देशः जायते अपि तु हेत्वपदेशः भवति। वात्स्यायनेन साधर्म्यवैधर्म्यभेदाभ्यां निगमनस्यापि भेदः वर्णितः। तथोक्तम्- साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्तेऽनेनेति प्रतिज्ञाहेतुदाहरणोपनया एकत्रेति निगमनं, निगम्यन्ते समर्थ्यन्ते सम्बध्यन्त[24] इति।

### ३. शब्दार्थतर्कामृते खण्डितानां तार्किकसिद्धान्तानामनुशीलनम् -

शाब्दिकसिद्धान्तान् प्रतिपादयन् मौनिश्रीकृष्णभट्टः तार्किकैः सम्मताम् अनुमितित्वजातिं खण्डयति एवञ्च अनुमितिशब्दः योगरूढ इति सिद्धान्तयति। तत्र अनुमितिशब्दः सङ्केतविशेषसम्बन्धेन परामर्शव्यापारकलिङ्गज्ञानजन्यज्ञानवृत्ति **'अनु पश्चात् मिति'** इति व्युत्पत्त्या साधयति। अत्र अनुमितिशब्दः यौगिकार्थेन सह पङ्कजादिशब्दवत् ज्ञानविशेषे अर्थे रूढः। अतः योगरूढः अयम् अनुमितिशब्दः। अस्मिन् अनुमितौ या अनुमितित्वजातिः तार्किकैः कल्पिता साऽपि न युक्तियुक्ता यतोहि अनुमितिनिष्ठा काचित् अनुमितित्वरूपा जातिः न अस्माकम् अनुभूतौ वर्तते। अत एव अननुभूतायाः जातेः कल्पनाऽपि अन्याय्या। तस्मादनुमितित्वं न

[23]न्या.सू.३९
[24]वा.भा. पृ.५७

जातिः, अपि तु अनुमितिशब्दस्यैवावच्छेदकत्वरूपम् अनुमितित्वम्।

## ४. मौनिश्रीकृष्णभट्टदृष्ट्या केवलाऽन्वय्यनुमानस्य खण्डनम् -

तार्किकैः केवलान्वयि, अन्वयव्यतिरेकि, केवलव्यतिरेकि इति भेदात् यदनुमानस्य त्रैविध्यं न्यरूपि, तत्र केवलान्वयि अनुमानं न स्वीकार्यमिति मौनिश्रीकृष्णभट्टस्य अभिप्रायः। मौनिश्रीकृष्णभट्टः केवलान्वयिनः खण्डने सुदृढं तर्कमपि प्रस्तौति। **'घटोऽभिधेयः प्रमेयत्वात्'** इति केवलान्वयिनः उदाहरणम्। अस्मिन्नुदाहरणे केवलम् अन्वयव्याप्तिः सङ्घटते। अत्र घटः पक्षः, अभिधेयत्वं साध्यं प्रमेयत्वं हेतुः। अत्रेदमवधेयं साध्यनिश्चयाभाववानिति पक्षस्य लक्षणं वर्तते। प्रकृते यः अभिधेयत्वरूपं साध्यं तस्य कुत्रापि अभावः नास्ति सर्वेषां पदार्थानाम् अभिधायाः विषयत्वात्। अतः अभिधेयरूपसाध्यस्य सर्वत्र निश्चये सति अत्यन्ताभावाऽप्रतियोगित्वेन व्यतिरेककोटेरभावात् एवञ्च प्रकृते घटे अभिधेयत्वस्य निश्चयत्त्वात्, साध्यनिश्चयाभावाधिकरणत्वाभावान्न घटः पक्षतालक्षणोद्देश्यतावच्छेदकाक्रान्तः। अतः साध्यनिश्चयाभावाधिकरणत्वरूपपक्षताया अभावान्न केवलान्वयिसाध्यकानुमानम्।

अत्र तार्किकैः समाधानं प्रस्तूयते न केवलं साध्यनिश्चयाभावः पक्षः अपि तु सिषाधयिषाविरहविशिष्टसिध्यभावः। प्रकृते यद्यपि घटे साध्यस्य निश्चयः वर्तते चेत् साध्यनिश्चयाभावान्न पक्षसिद्धिः तथापि घटे अभिधेयत्वं साधयितुम् अनुमितिविषयिणीच्छायां सत्यां विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वात् घटे पक्षता वर्तते। अतः प्रकृते साध्यनिश्चयसत्त्वेऽपि इच्छायाः प्राबल्यात् भवति अनुमितिः। अतः भवद्भिः यः दोषः समुपस्थापितः स न युक्तः। तथा च यत्र पर्वते चाक्षुषसन्निकर्षेण वह्निः गृहीतः चेत् पर्वते वह्नेः निश्चयेऽपि 'पर्वतः वह्निमान्' इति अनुमितिविषयिणीच्छायां सत्यां तत्राऽपि अनुमितिः। अतः न केवलं सिध्यभावः पक्षता अपितु सिषाधयिषाविरहविशिष्टसिद्ध्यभावः। प्रकृते तु प्रत्यक्षेण वह्नेः सिद्धेऽपि सिषाधयिषायाः सत्त्वात् तत्र अनुमितिरेव जायते न तु प्रत्यक्षम्। यतोहि पूर्वं प्रत्यक्षं जातं तदनन्तरं अनुमिनुयामीति इच्छा सिद्धस्य प्रत्यक्षस्य प्रतिबन्धिका। अत एव सिद्धप्रत्यक्षस्य इच्छया प्रतिबन्धे सति अनुमितिः भवति।

मौनिश्रीकृष्णभट्टः तार्किकसिद्धान्तं खण्डयति प्रत्यक्षसिद्धस्य पुनः अनुमितिविषयकसिषाधयिषायां सत्यामपि अनुमित्यपेक्षया प्रत्यक्षस्य प्राबल्यात् प्रत्यक्षं प्रबाध्याऽनुमितिः न प्रवर्तते अन्यथा 'पर्वते वह्निः तिष्ठति' इति आप्तवाक्यं श्रुतं पुनश्च चक्षुःसन्निकर्षाद् उष्णस्पर्शाच्च तत्र वह्निनिश्चयः कृतश्चेत् अनुमिनुयामीतीच्छायां सत्यां तत्रापि अनुमितिरेव स्याद्। यदि अत्र तार्किकाः वदन्ति भवतु अनुमितिरेव, सा तु इष्टैवेति चेन्न, अनुभवविरोधात्। अस्माकमनुभवे यत्र प्रत्यक्षेण ज्ञानं न

सम्भवति तत्रैव अनुमितौ प्रवृत्तिर्जायते। यत्र तु प्रत्यक्षेणैव सिद्धं न तत्र प्रत्यक्षं प्रबाध्याऽनुमितौ प्रवृत्तिः। अतः अनुभवविरोधात् प्रत्यक्षं प्रबाध्य नाऽनुमितिः एवञ्च पूर्वं प्रत्यक्षं जातम्, तं प्रबाध्य अनुमाने गौरवमपि वर्तते। तथाऽपि गौरवदोषसत्त्वेऽपि यदि अनुमितिः स्वीक्रियते चेत् ज्ञानद्वयापत्तिः यतोहि पूर्वमुत्पन्नस्य प्रत्यक्षात्मकज्ञानस्य बाधेऽपि न तस्य नाशः अपितु तेन सहैव सिषाधयिषायामनुमितिः। उभयोः परस्परप्रतिबन्धात् तदभावापत्तिश्च[25]।

सिषाधयिषाविरहविशिष्टसिद्ध्यभाव इत्यस्मिन् पक्षतायाः लक्षणे **'सिद्ध्यभावे'** इत्यस्मिन् सिषाधयिषाविरहविशिष्टेति विशेषणं प्रयुज्यमानेऽपि यस्मिन् काले येन पुरुषेण अनुमितिः क्रियते तद्भिन्नकालीने तद्भिन्ने पुरुषे च सिषाधयिषायाः विरहे अनुमितिः अनुपपद्येत। तद्वारणाय यदि एककालावच्छेदकत्वम् एकात्मवृत्तित्वमिति विशेषणान्तरं प्रयुज्यते चेत् महद् गौरवं स्यात्।

पुनश्च अन्वयव्याप्तेः खण्डने मानन्तरं प्रस्तौति - **'व्रीहीन् अवहन्ति'** इत्यत्र यथा व्रीहेः तुषीकरणम् अवहननेन नखविदलनेन च प्राप्तम्। तत्र नियमः क्रियते तुषीकरणम् अवहननेनैव कर्तव्यम् अदृष्टफलत्वात्। अतः अदृष्टरूपफलोद्देश्यतया तत्र तुषीकरणम् अवहननेनैव क्रियते, न तु नखविदलनेन। तथापि यत्र पर्वते चक्षुरादिप्रत्यक्षेण वह्निः सिद्धः तत्रापि सिषाधयिषायाम् अनुमितिः कर्तव्या इत्यत्र न कश्चन फलविशेषः येन अनुमितिरेव स्यात्। किञ्च यत्र पर्वतादिषु पक्षेषु चक्षुरादिसन्निकर्षेण वह्निः प्रत्यक्षसिद्धः, तं प्रत्यक्षसिद्धं वह्निं साधयितुमिच्छा कथं स्यात्। अतः अनुमिनुयामीति सिद्धस्य प्रतिबन्धकोत्तेजिकायाः इच्छायाः विरहे कथमनुमितिः स्यात्। तथाहि **'घटो अभिधेयः प्रमेयत्वात्'** इत्यादिः (केवलान्वयि) न अनुमानम्। अत एव मीमांसकादिभिरपि केवलान्वयि अनुमानं नाङ्गीक्रियते[26]। एतेन पक्षतायाः लक्षणे यत् सिषाधयिषाविरहविशिष्टेति विशेषणं प्रयुक्तं तन्न शाब्दिकमीमांसकसिद्धान्तसम्मतम् एवञ्च केवलान्वय्यनुमितिसम्पादनाय गुरुभूतस्य सिषाधयिषाविरहविशिष्टेति विशेषणस्य न किमपि फलम्, अत एव सिद्ध्यभावमात्रमेव पक्षतायाः लक्षणं स्वीकार्यम्। तथोक्तम् - **सिषाधयिषाविरहविशिष्टेति न पक्षतालक्षणघटकाभावप्रतियोगिसिद्धिविशेषणं शाब्दिकमीमांसकादिसम्मतम्। न हि तत्र गुरुभूतसिषाधयिषेति विशेषणं स्वीकृत्यानुमितिसम्पादने फलमस्ति। तस्मादनेकप्रमाणसामग्रीसत्त्वे विरोधेऽविरोधे वा प्रत्यक्षमिव तथाऽसाधारणतया तदनुमानस्वीकारः**[27]।

[25] शब्द.त. १६/६, पृ.५४

[26] शब्द.त. १६/६, पृ.५४-५५

[27] शब्द.त. १६/६, पृ.५५

## 5. मौनिश्रीकृष्णभट्टदृष्ट्या केवलव्यतिरेक्यनुमानस्य खण्डनम् -

केवलान्वय्यनुमानं निराकृत्य मौनिश्रीकृष्णभट्टः अनन्तरं केवलव्यतिरेक्यनुमानमपि युक्त्या खण्डयति। तार्किकः **'घटोऽभिधेयः प्रमेयत्वात्'** इति केवलान्वयिस्थले अव्याप्तिवारणाय प्रतियोगिसमानाधिकरणयत्समानाधिकरणाऽत्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यमिति सिद्धान्तव्याप्तिम् (व्यतिरेकव्याप्तिम्) उद्भावयति। किञ्च अस्मिन् व्याप्तिलक्षणे अभावपदनिवेशेन गुरुभूतत्वात् इदं व्याप्तिलक्षणमयुक्तम् अपितु यत्समानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तत्त्वमिति लक्षणस्य स्वरूपं स्वीकर्तव्यमिति चेत्, तन्न युक्तं यतोहि पूर्वलक्षणे अभावपदनिवेशे यथा गौरवं तथैव अत्रापि यावत्त्वनिवेशे गौरवम् अत उभयत्र गौरवसाम्यात् अभावघटितलक्षणमेव युक्तम्।

अनुमानप्रमाणेन यत्र अनुमेयज्ञानम्, तत्र आदौ धूमादिलिङ्गदर्शनम्, अनन्तरं धूमदर्शनेन सन्दिहानस्य अग्नेः व्याप्तिस्मरणम् भवति। एतेन सर्वत्र सन्देहपूर्विका एव अनुमितिः जायते न हि सन्देहरहिते निश्चतसाध्यस्थले। अत एव यत्र साध्यनिश्चयः तत्र अनुमतौ प्रवृत्तिरेव न भवति तथाहि यत्र लौकिकप्रत्यक्षेण ज्ञानं नोत्पद्यते तत्रैव अनुमितौ प्रवृत्तिरिति सर्वेषां राद्धान्तः। तस्मात् केवलान्वय्यनुमानं प्रत्यक्षप्रमित्यनुमितिसामाग्रीसत्त्वे च भवति। **'पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथा जलम्'** इत्यादिषु यत्र पक्षातिरिक्ते साध्यसाधनसहचारकत्वम् अनिश्चितं वर्तते तत्र व्यतिरेकानुमानं भवतीति तार्किकसिद्धान्तः। प्रकृते पक्षः पृथिवी, साध्यः इतरभेदः, हेतुः पृथिवीत्वम्। पक्षातिरिक्ते कुत्रापि पृथिवीत्वहेतोः वृत्तिता नाऽस्ति। एतेन यत्र पृथिवीत्वेतरभेदयोः सहचारः स्यात् तादृशोदाहरणाभावान्नाऽन्वयव्याप्तिः। अत एव प्रकृते केवलं व्यतिरेकव्याप्तिरेव सङ्घटते इति तार्किकाणामभिप्रायः[28]।

मौनिश्रीकृष्णभट्टः व्यतिरेकानुमानेऽपि अरुचिं प्रादर्शयत्। तार्किकैः यत् **'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्'** इत्यादिषु व्यतिरेकानुमानं स्वीकृतं तत्र न किमपि मानम्। यतोहि **'घटो न जलम्'** इत्यादिषु यथा घटे जलभेदज्ञानं प्रत्यक्षेणैव सिद्धं तथैव घटपृथिवीत्वावच्छेदेन पृथिव्याम् इतरभेदः प्रत्यक्षेणैव गृहीतश्चेत् तत्सिद्धये व्यतिरेकानुमानं नेष्टम्। अन्यथा इतरभेदरूपसाध्यस्य अप्रसिद्धौ व्याप्तिग्रहाभावात् अनुमितिरेव न स्यात्। **स्पष्टीकृतञ्चैतद् शब्दार्थतर्कामृते** - किञ्च व्यतिरेक्यनुमानं न प्रमाणान्तरं, घटो न जलमिति प्रत्यक्ष एव घटपृथिवीत्वावच्छेदेन तव भेदस्य गृहीतत्वात्। अन्यथा साध्याप्रसिद्धौ व्याप्तिग्रहाभावात् अनुमितिरेव

[28] शब्द.त. १६/६, पृ.५५

न स्यात्। न च साध्यव्याप्येतरभेदाभावसाधनव्यापकपृथिवीत्वाभावायाव्याप्तिग्रहोऽस्त्वेवेति वाच्यम्, अन्याव्याप्तिग्रहादन्यानुमितेरदर्शनात्। अनुमितित्वावच्छिन्नं प्रति साध्यसाधनयोः सहचारग्रहस्यैव हेतुत्वात्, न तु साध्याभावहेत्वभावयोर्व्याप्तिग्रहः। प्रतियोगितासम्बन्धेन साध्यहेत्वोर्व्याप्तिग्राहक इति चेत् सत्यम्, सा किं पक्षातिरिक्ते साध्यहेत्वोः सहचारनिश्चायक उत पक्षे? नाद्यः, पक्षातिरेक्तेऽनिश्चितसाध्यसाधनसहचारकत्वमिति स्वोक्तिविरोधात्। नान्त्यः, पक्षे निश्चयसत्त्वे पक्षतात्वव्याघातः, अनिश्चितसाध्यकस्यैव पक्षतात्वादिति[29]।

ननु व्यतिरेकाऽनुमानाऽभावे इतरभेदस्य प्रत्यक्षेण सिद्धेऽपि जलादीनां ये परमाणवः अतीन्द्रियविषयाः, तेषां परमाणूनामप्रत्यक्षत्वात् इतरभेदस्य यः प्रतियोगी जलादिपरमाणुः तस्य भेदस्य पृथिव्यां प्रत्यक्षेणाऽसिद्धे तत्साधयितुं व्यतिरेक्यनुमानं भवद्भिः अवश्यमेव अभ्युपेयमिति चेन्न, यथा पिशाचादीनाम् अतीन्द्रियत्वेऽपि स्तम्भे पिशाचभेदप्रत्ययो भवति तथैव अत्रापि जलीयपरमाणुगतभेदप्रत्ययोऽपि पृथिव्यां सिद्ध्यति। तदर्थं व्यतिरेकानुमानं किमर्थं स्वीकार्यम्[30]। व्यतिरेकानुमानखण्डने अन्यान् हेतून् प्रदर्शयन्नाह - **तस्मात्तत्र प्रत्यक्षस्यैवानुभवसिद्धत्त्वादनुकूलतर्काभावाच्च, लाघवाच्च न केवलव्यतिरेकानुमानमिति**।

व्यतिरेकानुमानखण्डने युक्त्यन्तरं - यथा **'पर्वतो वह्निमान् पर्वतत्वाद्'** इत्यत्र पर्वतपक्षकः वह्निसाध्यकः पर्वतत्वहेतुः सर्वसपक्षविपक्षव्यावृत्तपक्षमात्रवृत्तित्वात् साधारणहेत्वाभासः वर्तते तथैव **'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्'** इत्यत्रापि पृथिवीपक्षक इतरभेदसाध्यकः यः पृथिवीत्वहेतुः सोऽपि सर्वसपक्षविपक्षव्यावृत्तपक्षमात्रवृत्तित्वात् साधारणहेत्वाभासः स्यादुभयोः तुल्यविषयत्वात्। तथा च पक्षाऽतिरिक्ते च उभयत्र साध्यसाधनयोः अनिश्चितसहचारकत्वमपि तुल्यमेव। तथाहि 'पर्वतो वह्निमान् पर्वतत्वात्' इति असद्धेतुः एवञ्च पृथिवी **'इतरेभ्यो भिद्यते पृथिवीत्वात्'** इति सद्धेतुः इत्यत्र विनिगमनाविरहात् अनुकूलतर्काभावात् फलाभावाच्च केवलव्यतिरेकाऽनुमानं तार्किकैरपि न स्वीकर्तव्यम्।

### 6. मौनिश्रीकृष्णभट्टदृष्ट्या अनुमानप्रमाणस्य खण्डनम् -

अत्र सिद्धान्तोऽयं सुस्थिरः यन्न केवलान्वय्यनुमानं न हि केवलव्यतिरेक्यनुमानम् अपितु यत्र तादृशः अन्वयव्याप्तिव्यतिरेकोभयव्याप्तिः संघटते तादृशहेतु-

---

[29] शब्द.त. १६/८, पृ.५६

[30] ननु इतरभेदस्य प्रत्यक्षत्वे जलादिपरमाणूनामतीन्द्रियत्वात् प्रतियोगिकेतरभेदप्रत्यक्षाभावात् पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादिति व्यतिरेक्यनुमानमावश्यमिति चेन्न, स्तम्भे पिशाचभेदप्रत्ययवदुपपत्तेः। (शब्द.त. १६/९, पृ.५७)

विशिष्टानि पर्वतो वह्निमान् धूमादित्यादीनि पञ्चरूपोन्नानि प्रसिद्धानुमानान्येव अनुमानप्रमाणेन ग्रहीतव्यानि[31]। तानि च पञ्च रूपाणि पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति[32]।

यत्र साध्यस्य सिद्धिः क्रियते सः पक्षः। पक्षे हेतुवृत्तित्वं पक्षसत्त्वम् यथा पर्वतः वह्निमान् धूमादित्यत्र साध्यस्य वह्नेः सिद्धिः पर्वते क्रियते अतः पर्वतः पक्षः। तस्मिन् पर्वते धूमस्य वृत्तित्वात् धूमहेतौ पक्षसत्त्वं वर्तते। यत्र साध्यसाधनयोः सहचारः निश्चतः सः सपक्षः तस्मिन् हेतुवृत्तित्वं पक्षसत्त्वम् यथा महानसः। महानसे वह्निधूमयोः सहचारः प्रत्यक्षप्रमाणेन निश्चतः, तस्मिन् सपक्षे धूमस्य वृत्तित्त्वात् धूमे पक्षसत्त्वमपि। यत्र साध्यस्याभावः निश्चितः तस्मिन् हेतोः अवृत्तित्वं विपक्षव्यावृत्तिः यथा जलह्रदः। वह्नेः अभाववति जलह्रदे धूमहेतोरपि अवृत्तित्वात् विपक्षाऽवृत्तित्वमपि धूमहेतौ। यस्य हेतोः साध्यः प्रत्यक्षादिप्रमाणान्तरेण बाधितः, सः बाधितः उच्यते एवञ्च यस्य साध्यः प्रमाणान्तरेण अबाधितः सः अबाधितविषयः हेतुः। यथा **'वह्निः अनुष्णा कृतकत्वात्'** इत्यत्र कृतकत्वहेतुना वह्नौ अनुष्णत्वं साध्यते परञ्च स्पार्शनप्रत्यक्षेण वह्नौ उष्णत्वं सिद्धम् अतः साध्यस्य अनुष्णस्य प्रत्यक्षप्रमाणेन बाधितत्वात् अयं हेतुः बाधितः किञ्च 'पर्वतो वह्निमान् धूमात्' इत्यत्र वह्निहेतुः न केनाऽपि प्रमाणेन बाधितः। अतः तस्य अबाधितसाध्यस्य साधके धूमहेतौ अबाधितविषयत्वमपि। यस्य हेतोः प्रतिपक्षः विद्यते सः सत्प्रतिपक्ष एवञ्च यस्य सत्प्रतिपक्षः न विद्यते सः असत्प्रतिपक्षः। यथा **शब्दः अनित्यः नित्यधर्मरहितत्वात्** एवञ्च **शब्दः नित्यः अनित्यधर्मरहितत्वात्** इत्यत्र उभयोः सत्प्रतिपक्षः विद्यते अतः आभ्यां हेतुभ्यां न साध्यस्य सिद्धिर्भवति। किञ्च पर्वतो वह्निमान् धूमादित्यत्र धूमहेतोः न कश्चन सत्प्रतिपक्षः अतः धूमहेतौ असत्प्रतिपक्षत्वमपि वर्तते[33]। एतेन धूमहेतुः पञ्चरूपोपपन्नः वर्तते तस्मात् धूमहेतुना वह्निरूपसाध्यस्य पर्वते सिद्धिर्भवति।

मौनिश्रीकृष्णभट्टेन अन्वयव्यतिरेकव्याप्तिविशिष्टमेव प्रसिद्धानुमानं प्रतिपाद्य अनुमानप्रमाणमेव खण्डितम्। तथोक्तम् - पर्वतो वह्न्यभाववान् पर्वतत्वान्महानसान्यत्वाद् वेति सत्प्रतिपक्षसत्त्वात् कथं तस्य सद्धेतुत्वम्। न चाऽत्र प्रतिपक्षस्य

[31]उभयसहचारग्रहीतृव्याप्तिकत्वमन्वयव्यतिरेकित्वम्। यथा पर्वतो वह्निमान् धूमादिति प्रसिद्धानुमानम्। (शब्द.त. १६/९, पृ. ५७)

[32]स पञ्चरूपोपपन्न एव स्वसाध्यं साधयितुं क्षमते। न त्वेकेनापि रूपेण हीनः। तानि पञ्चरूपाणि तु पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। (त.भा., पृ.७२)

[33]अन्वयव्यतिरेकिणि हेतौ अवश्यं पञ्चरूपोपपन्नतापेक्षणीया। पक्षसत्त्वं सपक्षसत्त्वं विपक्षव्यावृतत्वं सबाधितत्वम् असत्प्रतिपक्षत्वं चेति पञ्च रूपाणि। यत्र साध्यसन्देहः सः पक्षः। यत्र साध्यनिश्चयः स सपक्षः। यत्र साध्याभावनिश्चयः स विपक्षः। साध्याभावापेक्षो बाधः। साध्याभावव्याप्यहेतुसत्त्वं प्रतिपक्षत्वम्। (शब्द.त. १६/९, पृ.५७)

तर्कप्रकाशे तर्कामृते च प्रसिद्धे तूदाहरणे सत्प्रतिपक्षोदाहरणे चैतस्योक्तत्वात्। एवञ्चाऽनुमानं परस्परविरोधात् फलाभावाच्च न प्रमाणमिति[34]।

अत्र तार्किकैः अनुमानप्रमाणाऽस्वीकारे शङ्का समुद्भाव्यते यदि भवद्भिरनुमानं प्रमाणत्वेन नाङ्गीक्रियते चेत् ईश्वरादीनां सिद्धिः कथं स्यात्। यतोहि ईश्वरस्य प्रत्यक्षाऽविषयत्वात् **'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवद्'** इत्यनुमानेनैव तत्सिद्धिः। अत्र मौनिश्रीकृष्णभट्टः गदति अनुमानप्रमाणाऽनङ्गीकारेऽपि ईश्वरसिद्धिः **'द्यावाभूमी जनयन्देव एकः', 'एतस्मादाकाशस्सभूतः......'** इत्यादिभिः श्रुतिवचनप्रमाणैः (शब्दप्रमाणैः) सम्भवा। अतः ईश्वरसिद्धये अनुमानप्रमाणं नेष्टम्।

पुनश्च अनुमानप्रमाणखण्डने युक्त्यन्तरं प्रस्तुवन् मौनिश्रीकृष्णभट्टः ब्रवीति यथा चन्दनांशस्य इन्द्रियसन्निकर्षेण लौकिकप्रत्यक्षं भवति। किञ्च सौरभांस्य इन्द्रियादिलौकिकसन्निकर्षाऽजन्यत्वे उपनीतभानात्मकमलौकिकं प्रत्यक्षम्। तथैव धर्मांशे इन्द्रियसन्निकर्षेण लौकिकप्रत्यक्षं, वह्न्यंशे उपनीतभानात्मकमलौकिकप्रत्यक्षम्, उभयोः तुल्यत्वात् उपनीतभानमेव स्वीकार्यं किमर्थमेकत्र उपनीतभानम् अपरत्र अनुमानम् इत्यत्र नाऽस्ति किञ्चिद् विनिगमकम्। तथा च सहचारग्रहसापेक्षमपि उभयोस्तुल्यमपि वर्तते। अतः उपनीतभानेनैव अनुमानस्य गतार्थत्वात् अनुमानं प्रमाणाऽन्तराऽस्वीकारे लाघवमेव। तथोक्तम् - **चन्दनांशे लौकिकप्रत्यक्षं सौरभांशे उपनीतभानात्मकमलौकिकप्रत्यक्षम्। तथा चोभयत्रापि तुल्यत्वादस्तु उपनीतभानमेव उपलभ्यमानविनिगमकाभावेनैकत्रानुमानमपरत्रोपनीतभानमिति न युक्तमत्। सहचारग्रहसापेक्षत्वमप्युभयोस्तुल्यं प्रमाणान्तरास्वीकारेण लाघवाच्च**[35]।

### 7. हेत्वाभासविचारः -

यद्यपि अनुमानप्रमाणाऽस्वीकारे तदङ्गभूतस्य हेतोः दोषविचारः निष्फलः। तथापि तार्किकरीत्या ये हेतुदोषाः परिगणिताः ते युक्ताः न वा इति विचारः मौनिश्रीकृष्णभट्टेन शब्दार्थतर्कामृते विवेचितः। तेषामनुशीलनमिदानीं विधीयते।

व्युत्पत्त्याधारेण हेत्वाभासशब्दः द्विधा निष्पद्यते। आभासन्त इति आभासाः, हेतोराभासा इति व्युत्पत्त्या हेत्वाभासशब्दः दोषपरः, एतेन अनैकान्तिकासिद्धादयः हेतोः दोषाः। हेतुवदाभासन्त इति व्युत्पत्त्या निष्पन्नः हेत्वाभासशब्दः दुष्टहेतोः वाचकः। किञ्च प्रकृते हेत्वाभासशब्दः न दोषपरः अपितु दुष्टहेतोः वाचकः[36] ग्राह्यः।

---

[34] शब्द.त. १६/१०, पृ.५७

[35] शब्द.त. १६/१०, पृ.५७

[36] हेत्वाभासाः आभासीयभूता हेतवो दुष्टहेतव इति यावत्, हेतुवदाभासन्त इति व्युत्पत्तेः, न तु

यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वम्[37] इति हेत्वाभासलक्षणम् अर्थात् यद्विषयकं ज्ञानम् अनुमितेः विरोधि भवति तस्य आश्रयः हेत्वाभास उच्यते। सत्प्रतिपक्षस्थले विरोधिव्याप्तेः ज्ञानमेव अनुमितेः प्रतिबन्धकः तथा तस्याः व्याप्तेः आश्रयता ज्ञानसम्बन्धेन हेतौ तिष्ठति। अतः सत्प्रतिपक्षशब्देन हेतुरुच्यते। अत्र इयं शङ्का जायते यदि ज्ञानं सम्बन्धतया स्वीक्रियते चेत् सत्प्रतिपक्षादिवत् 'पर्वतो वह्निमान् धूमात्' इत्यादिषु सद्धेतुस्थलेष्वपि बाधस्य प्रसक्तिः स्यात् यतोहि तत्रापि साध्याऽभावविषकज्ञानत्वेन 'वह्न्यभाववान् पर्वतः' इत्याकारं भ्रमात्मकं ज्ञानं स्यात्, यद्धि पर्वतो वह्निमान् इत्यनुमितेः विरोधि भवति। तथा च ज्ञानरूपसम्बन्धेन वह्न्यभावस्य आश्रयतायाः धूमरूपसद्धेतौ विद्यमानत्वात् तत्रापि बाधाऽऽपत्तिः। अस्याः समाधानमेवं वर्तते यस्मिन् हेतौ बाधव्यवहारः प्रमाणसिद्धः तत्रैव ज्ञानरूपसम्बन्धस्य कल्पना क्रियते। सद्धेतुस्थले बाधव्यवहारस्य प्रमाणेनाऽसिद्धत्वात् तत्र ज्ञानं सम्बन्धतया स्वीकर्तुं न शक्यते। सत्प्रतिपक्षस्थलेषु बाधः प्रमाणसिद्धः अतः तत्र ज्ञानस्य सम्बद्धता स्वीकार्या एव।

अत्र हेत्वाभासज्ञानं प्रति अनुमितेः विरोधित्वम् इत्यस्य अनुमितेः एवञ्च अनुमितेः करणस्य अन्यतरस्य विरोधित्वमिति तात्पर्यम्। अन्यथा व्यभिचारादिषु **'पक्षः साध्यवान्'** इतिवत् अनुमितेः विरोधिताया अभावस्य व्यभिचारे हेत्वाभासलक्षणस्य अव्याप्तिः स्यात्। तत्करणस्य इत्युच्यमाने अनुमितेः करणस्य परामर्शस्य विरोधिताया विद्यमाने नाऽव्याप्तिः[38]।

एतेन यद्धेतुविषयकं दोषज्ञानं जायते तज्ज्ञानं तेनैव हेतुना उत्पद्यमानस्य अनुमितेः प्रतिबन्धकम्। एतत्स्वीकारे तु एकस्मिन्नपि हेतौ व्यभिचारज्ञाने जाते अन्यैः हेतुभिः जायमानाऽनुमितिः प्रतिबन्धिता स्यात्। किञ्च एवन्तु न भवति प्रत्युत एकस्मिन् हेतौ व्यभिचारे सत्यपि हेत्वन्तरेण अनुमितेरुत्पत्तिर्भवति। अतः दोषज्ञाने अनुमितौ च समानहेतुताया विवक्षा क्रियते। व्यभिचारज्ञानं न साक्षात् अनुमितेः प्रतिबन्धकं यतोहि तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिः तथा च तदभावव्याप्यवत्ताबुद्धिरेव प्रतिबन्धिका भवति। अनुमितिं प्रति व्यभिचारज्ञानं न कुत्रापि प्रतिबन्धकत्वेन प्रविष्टम्। अतः अनुमितिशब्दस्य अनुमितितत्करणान्यतरे लक्षणोचिता एव

हेतोराभासादोषविशेषाः। (तत्त्व.चिन्ता., पृ.७६२)। यद्यपि दुष्टहेतूनामेव विभजनात् दुष्टहेतुलक्षणमेव वक्तव्यम्, तथापि दोषज्ञाने जाते दोषवत्त्वरुपदुष्टत्वलक्षणस्य ज्ञातुं शक्यत्वाददोषः। मूले हेत्वाभासाः इति पदं हेतुवदाभासन्त इति व्युत्पत्त्या दुष्टहेतुपरमेवेति मन्तव्यम्। (न्या.सि.मु., पृ.२३८)

[37] न्या.सि.मु.अनु., पृ.२४३

[38] अनुमितित्करणान्यतरप्रतिबन्धकत्वं व्यभिचारज्ञानस्य व्याप्तिप्रतिबन्धकत्वेनेति विवेकः। (शब्दा.त. १७/१, पृ.५७)। अनुमितिविरोधित्वञ्चानुमितितत्करणान्यतरविरोधित्वं, तेन व्यभिचारिणि नाव्याप्तिः, (न्या.सि.मु.अनु., पृ.२४४)

वर्तते[39]।

**सव्यभिचारविरुद्धसत्प्रतिपक्षबाधित**भेदात् पञ्चविधः हेत्वाभासः। तत्र स-व्यभिचारहेत्वाभासः साधारणाऽसाधारणाऽनुपसंहारिभेदात् त्रिविधः। साध्यवदन्य-वृत्तित्वं साधारणत्वम्, यथा पर्वतो धूमवान् वह्नेरिति। अत्र साध्यः धूमः तद्वान् पर्वतः तदन्यः अयोगोलकः तत्र वह्नेः वृत्तित्वात् अयं वह्निहेतुः साधारणसव्यभिचारः। 'सा-ध्याभाववद्वृत्तित्वमि'ति लक्षणन्तु न युक्तम्। यतोहि **'पर्वतो धूमवान् वह्नेः'** इत्यत्र साध्यः धूमः तदभाववति अयोगोलके वह्नेः विद्यमानत्वात् वह्निहेतौ साधारणसव्य-भिचारलक्षणसङ्गतावपि **'वृक्षः कपिसंयोगी एतद्वृक्षत्वात्'** इत्यत्र साधारणसव्य-भिचारस्याऽऽपत्तिः। प्रकृते साध्यः कपिसंयोगः तदभाववान् मूलावच्छेदेन वृक्षः तस्मिन् एतद्वृक्षत्वरूपहेतोः वृत्तिता एव वर्तते न हि वृत्तिताया अभावः। अतः स-द्हेतुस्थले अतिव्याप्तिप्रसङ्गः। यदि प्रकृते अतिव्याप्तिदोषवारणाय प्रतियोगिवैय-धिकरण्यमिति निविश्यते चेत् अतिव्याप्तिदोषः वारितः। किञ्च एतद्गुरूभूतविशेष-णस्वीकारे गौरवं स्यात् अत एव साध्यवदन्यावृत्तित्वमित्येव लक्षणं न्याय्यम्। एतेन साध्यवान् एतद्वृक्षः तदन्यः घटपटादयः तस्मिन् एतद्वृक्षत्वरूपहेतोः अवृत्तिता एव न तु वृत्तिता, अतः अन्योन्याभावस्य च व्याप्यवृत्तित्वान्न दोषः[40]।

व्यभिचारहेत्वाभासस्य द्वितीयो भेदः असाधारणः। साध्यासमानाधिकरणो हेतुः असाधारणस्य लक्षणम्। तेन साध्यसामानाधिकत्वरूपव्याप्तिः प्रतिबध्यते। यथा शब्दो नित्यः शब्दत्वात् इति। अत्रेदमवश्यमवधेयं यत् तार्किकाणां मते शब्दा अनित्या भवन्ति। अतः शब्दत्वहेतुः नित्यत्वाऽसमानाधिकरणत्वात् असाधारणहे-त्वाभासः।

मौनिश्रीकृष्णभट्टेन व्यभिचारस्य असाधारणभेदो नैव स्वीकृतः। साधार-णस्यैव साधारणाऽसाधारणोभयसाधारणं 'साध्यासमानाधिकरणं स्वसमानाधिकरणं वा' लक्षणमिदं प्रतिपादितम्। एतेन 'पर्वतो धूमवान् वह्नेः', 'शब्दः नित्यः शब्दत्वात्' इत्युभयस्थले अस्य लक्षणस्य समन्वयो भवति। साध्यः धूमः तदसमानाधिकरणे यः धूमवदन्यः तत्समानाधिकरणः वह्निः अतः भवति साधारणहेत्वाभासलक्षणस्य समन्वय एवमेव साध्यं नित्यत्वं तदसमानाधिकरणं यन्नित्यवदन्यत्वं तत्समानाधि-

[39]दोषज्ञानञ्च यद्धेतुविषयकं, तद्धेतुकानुमितौ प्रतिबन्धकं, तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरे-णाऽनुमित्युत्पत्तेः, तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्याऽनुमितिविरोधित्वाभावेऽपि न क्षतिरिति सङ्क्षेपः, (न्या.सि.मु.अनु., पृ.२४४)

[40]साध्यवदन्यवृत्तित्वं साधारणत्वं यथा धूमवान् वह्नेः। साध्याभाववद्वृत्तित्वं न सम्यक्, कपिसंयोगी एतद्वृक्षत्वाद् इत्यत्र संयोगाभाववद्वृत्तित्वादेतद्वृक्षत्वस्यापि तत्त्वापत्तिः। तदर्थं प्रतियोगिवैयधिकरण्य-निवेशे गौरवम्। अन्योन्याभावस्य च व्याप्यवृत्तित्वान्न दोषः। (शब्द.त. १७/२, पृ.५८)

करणं शब्दत्वमिति अतः साधारणस्य लक्षणे असाधारणस्यापि समन्वयोऽभूत्[41]। तच्च निश्चितसाध्यवद् व्यावृत्तत्वे सति निश्चितसाध्याभाववत् वृत्तित्वम्, साध्यव्यापकीभूताभावप्रतियोगित्वं वा। एतेन तार्किकैः यः असाधारण इति सव्यभिचारस्य द्वितीयभेदः कल्पितः तस्याऽकल्पनायां लाघवम्[42]।

केवलान्वयिधर्मावच्छिन्नपक्षकत्वमनुपसंहारित्वम्, यथा 'सर्वमनित्यं प्रमेयत्वाद्' इत्यादयः । अत्र सर्वमिति पक्षः अनित्यत्वमिति साध्यं प्रमेयत्वाद् इति हेतुः । अयं प्रमेयत्वहेतुः केवलान्वयि यतोहि सर्वे विषयाः प्रमेयाश्चेत् कुत्रापि प्रमेयाऽभावात् व्यतिरेकव्याप्तौ उदाहरणाभावान्न व्यतिरेकव्याप्तिः सङ्घटते। अतः केवलान्वयिधर्मावच्छिन्नपक्षकत्वात् प्रमेयत्वमिति अनुपसंहारिसव्यभिचारहेत्वाभास[43]। अथ वा पक्षकत्वमनुसंहारित्वम् इति लक्षणम्। **'आकाशवान् धूमात्', 'धूमवान् आकाशाद्वा'** इत्यत्र धूमः आकाशो वा अनुपसंहारी हेत्वाभासः[44]। पुनश्च लाघवाद् अवृत्तिसाध्यकत्वमिति लक्षणान्तरमेव स्यात्। किञ्च लक्षणमिदं स्वीकारे **'धूमवान् आकाशात्', 'आकाशवान् धूमात्'** इत्यत्र धूमाऽऽकाशहेतौ अस्य लक्षणस्याऽप्रवृतौ कथं अनयोः हेत्वाभासः सिध्येत् एवञ्च हेत्वाभासलक्षणाप्रवृत्तौ अनयोः सद्धेतुतापत्तिः स्यादिति चेन्न 'धूमवान् आकाशात्' इत्यत्र यद्यपि अनुपसंहारिव्यभिचारहेत्वाभासलक्षणं न प्रवर्तते तथापि स्वरूपासिद्धौ एव अनयोः हेत्वोः निवेशान्न सद्धेतुतापत्तिः[45]। अतः अवृत्तिसाध्यकत्वमित्यपि लक्षणं स्वीकर्तुं शक्यते।

द्वितीयः हेत्वाभासः विरुद्धः । तस्य लक्षणं साध्याऽसामानाधिकरणत्वं विरुद्धत्वम्, यथा 'इयं गौः अश्वत्वात्' इति। अत्र साध्यं गोत्वं तच्च साध्यं गोव्यक्तिषु विद्यते एवञ्च हेतुः अश्वत्वम् अश्वव्यक्तिषु विद्यते, अतः साध्याऽसामानाधिकरणत्वात् अश्वत्वहेतुः विरुद्धहेत्वाभासः । यद्यपि प्रकृतहेतौ साधारणत्वरूपहेत्वाभासलक्षणमपि

[41]साध्यसमानाधिकरणं स्वसमानाधिकरणं वा। भवति हि धूमासामानाधिकरणे यद् धूमवदन्यत्वं तत्समानाधिकणो वह्निः । एवं शब्दो नित्यः शब्दत्वादित्यादौ नित्यत्वासमानाधिकरणं यन्नित्यवदन्यत्वं तत्समानाधिकरणं शब्दत्वमिति साधारणेनैवासाधारणस्यापीति सङ्ग्रहः । (शब्द.त. १७/२, पृ.५८)

[42]तच्च निश्चतसाध्यवद् व्यावृत्तत्वे सति निश्चतसाध्याभाववद् वृत्तित्वम्, साध्यव्यापकीभूताभावप्रतियोगित्वं वा। (शब्द.त. १७/२, पृ.५८)

[43]आकाशवान् धूमात् केवलान्वयिधर्मावच्छिन्न पक्षकत्वमनुपसंहारित्वम्। उदाहरणं सर्वमनित्यं प्रमेयत्वादित्यादि। यद्वा प्रवृत्तिसाध्यहेत्वन्यतरत्वम्। आकाशवान् धूमात्। धूमवानाकाशात्।शब्दार्थतर्कामृतम्, शब्द.त. १७/२, पृ.५८

[44]यद्वा प्रवृत्तिसाध्यहेत्वन्यतरत्वम्। आकाशवान् धूमात्। धूमवानाकाशात्। शब्दार्थतर्कामृतम्, शब्द.त. १७/२, पृ.५८

[45]लाघवादवृत्तिसाध्यकत्वमिति वा। न चैवं धूमवानाकाशादित्यादेरसङ्ग्रहः स्वरूपासिद्ध एव तन्निवेशात्। शब्द.त. १७/२, पृ.५८

सङ्घटते[46] तथापि उपाधिभेदाद् भेदः वर्तते इति वक्तुं न शक्यते अन्यथा गौरवं स्यात्। यद्वा साध्याभावव्याप्तो हेतुर्विरुद्ध इति लक्षणम्, यथा घटो नित्यः सावयवत्वात्। अत्र साध्यं नित्यत्वं साध्याभावः नित्यत्वाभावः तद्व्याप्तः (अनित्यत्वव्याप्तः) 'सावयवत्वम्' हेतुः, अतः सावयवत्वमिति विरुद्धहेत्वाभासः।

सत्प्रतिपक्ष इति तृतीयः हेत्वाभासः। सत्प्रतिपक्षस्य तार्किकैः सम्मतं त्रिविधं लक्षणं मौनिश्रीकृष्णभट्टेन विचारितम्। तत्र दीधितीकारादीनां लक्षणमुपस्थापयता न्यगादि 'साध्यप्रतिबन्धकपरामर्श' इति। यथा पर्वतो वह्निमान् धूमान्महानसवत्, पर्वतो वह्न्यभाववान् पाषाणमयत्वात् कुड्यवत् इत्यत्र साध्यः वह्निः तस्य प्रतिबन्धकः वह्न्यभावव्याप्यपाषाणमयः पर्वत इति द्वितीयानुमानस्य परामर्शः अतः अत्र सत्प्रतिपक्षहेत्वाभासः। तथोक्तं मौनिश्रीकृष्णभट्टेन- पर्वतो वह्निमान् धूमात्, पर्वतो वह्न्यभाववान् पाषाणमयत्वादित्यादौ वह्निव्याप्यवत्तापरामर्शसत्त्वान्न वह्न्यभावानुमितिः। वह्न्यभावव्याप्यवत्तापरामर्शाच्च न वह्न्यभावानुमितिः। तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वादिति। कैश्चिदत्र संशयाकारानुमितिरिष्यते[47]।

द्वितीयं लक्षणं पक्षे साध्याभावव्याप्यहेतुसत्त्वं सत्प्रतिपक्षत्वमिति। साध्यः वह्निः साध्याभावः वह्न्यभावः तस्य व्याप्यः हेतुः पाषाणमयत्वहेतुः अतः अयं सत्प्रतिपक्षः। तृतीयं लक्षणं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः। अत्र साध्यः वह्निः साध्याभावः वह्न्यभावः तस्य साधकं हेत्वन्तरं पाषाणमयत्वहेतुः अतः सत्प्रतिपक्षहेत्वाभासः।

असिद्धिः त्रिधा स्वरूपासिद्धिः, आश्रयासिद्धिः, व्याप्यत्वासिद्धिश्चेति। असिद्धेः सामान्यलक्षणं व्यभिचाराद्यन्यपरामर्शप्रतिबन्धकधर्मवत्त्वमिति[48]। पक्षतावच्छेदकविशिष्टपक्षे हेतुतावच्छेदकावच्छिन्नहेतोरभावः स्वरूपासिद्धिरुच्यते, यथा 'घटः पृथिवी पटत्वात्' इत्यत्र घटः पक्षः पृथिवीत्वं साध्यं पटत्वहेतुः। अत्र पक्षः घटः पक्षता घटे पक्षतावच्छेदकं घटत्वं तदविशिष्टे घटे हेतुः पटत्वं हेतुता पटत्वे हेतुतावच्छेदकं पटत्वत्वं तदवच्छिन्नस्य पटत्वरूपहेतोरभावादयं पटत्वहेतुः स्वरूपासिद्धः[49]।

पक्षाऽवृत्तिर्हेतुः स्वरूपासिद्धिरुच्यते। यथा 'पर्वतो वह्निमान् महानसत्वात्' इत्यत्र महानसरूपहेतोः पक्षे अवृत्तिता वर्तते। अयञ्च स्वरूपासिद्धिः विशेषणासिद्धिः विशेष्यासिद्धिः भागासिद्धिश्चेत्यादिभेदेन बहुविधः वर्तते। इदानीं क्रमशः एतेषामु-

[46] साध्यः गोत्वं तदभाववद्वृत्तित्वं अश्वत्वे अतः अश्वत्वहेतुः साधारणहेत्वाभासलक्षणेन विशिष्टः।

[47] शब्द.त. १७/४, पृ.५८-५९

[48] न्या.सि.मु.अनु. पृ.२०२

[49] शब्द.त. १७/५, पृ.५९

दाहरणं निरूप्यते। शब्दो नित्यश्चाक्षुषत्वे सति जन्यत्वादिति विशेषणाऽसिद्धेरुदाहरणम्। अत्र 'चाक्षुषत्वे सति जन्यत्वात्' इत्यस्मिन् हेतौ यत् चाक्षुषत्वे सति इति विशेषणं वर्तते सः असिद्धः अतः अयं विशेषणासिद्धिः। विशेष्याऽसिद्धेरुदाहरणं 'शब्दः नित्यः गुणत्वे सति परमाणुवृत्तित्वात्' इति। अत्र गुणत्वे सति परमाणुवृत्तित्वादित्यस्मिन् हेतौ शब्दे गुणत्वं तु वर्तते किञ्च परमाणुवृत्तिता नाऽस्ति अतः अत्र विशेष्यपदस्य असिद्धत्वादयं विशेष्यासिद्धिः। एतानि द्रव्याणि निरवयवत्वादिति भागासिद्धिः। परमाणुद्रव्याणि निरवयवानि वर्तन्ते एवञ्च कार्यद्रव्याणि तु अवयवविशिष्टान्येव भवन्ति तथाहि केषुचित् भागेषु हेत्वाधिकरणता केषुचित् भागेषु तदभाववत्ता विद्यते अतः अयं भागासिद्धिः[50]।

यत्र पक्षोऽसन् सिद्धसाधनं वा आश्रयासिद्धिः। अस्मिन् लक्षणद्वयं समायुक्तं वर्तते प्रथमं पक्षोऽसन् इति। तस्योदाहरणं 'शशविषाणं नित्यम् अजन्यत्वादिति'। प्रकृते शशविषाणरूपः यः पक्षः तस्य अलीकपदार्थत्वात् सत्ता एव नाऽस्ति अतः तेन हेतुना साध्यस्य सिद्धिः कथं स्यात्। अपरः सिद्धसाधनं यथा 'शरीरं हस्तादिमत् हस्तादिमत्तया प्रतीयमानत्वात्'। प्रकृतानुमाने यः शरीररूपः पक्षः वर्तते सः हस्ताद्यवयवविशिष्ट इति प्रत्यक्षेण सिद्धं यतोहि हस्ताद्यवयवसमुदायतिरिक्तं शरीरस्य न अतिरिक्ततया उपस्थितिः, अतः सिद्धस्य साधनत्वादयमाश्रयासिद्धिरूपो हेत्वाभासः[51]। पुनश्च मणिकारस्य आश्रयासिद्धेः लक्षणं प्रतिपादितं मौनिश्रीकृष्णभट्टेन। मणिकारेण पक्षतावच्छेदकासिद्धिराश्रयासिद्धिरिति लक्षणमुक्तम्। यथा गगनकमलं सुरभि कमलत्वात् इति। अस्मिन्ननुमानवाक्ये गगनकमलरूपपक्षे सुरभित्वं साध्यते किञ्च कमलरूपपक्षे गगनीयत्वाभावात् पक्षतावच्छेदकताया असिद्धत्वात् इदमनुमानम् आश्रयासिद्धिहेत्वाभासविशिष्टम्[52]।

असिद्धेः तृतीयो भेदः व्याप्यत्वासिद्धिः। तार्किकसिद्धान्तदृष्ट्या व्याप्यत्वासिद्धेः लक्षणं प्रतिपादयन् मौनिश्रीकृष्णभट्टः आदौ मणिकारस्य मतं समुपस्थापयन् आह- स्वरूपसिद्ध्याश्रयासिद्धिभिन्नाऽसिद्धिः व्याप्यत्वासिद्धिरिति[53] यथा पर्वतो वह्निमान् धूलीपटत्वात्। अयञ्च धूलिपटः न हि स्वरूपासिद्धिः न हि आश्रयासिद्धिः

---

[50]पक्षावृत्तिर्हेतुः स स्वरूपासिद्धः यथा पर्वतो वह्निमान् महानसत्वात्। स च विशेषणासिद्धः विशेष्यासिद्धः भागासिद्धश्चेति भेदाद् बहुविधः। आद्यो यथा शब्दो नित्यश्चाक्षुषत्वे सति जन्यत्वाद्। द्वितीयो यथा शब्दो नित्यः गुणत्वे सति परमाणुवृत्तित्वात्। तृतीयो यथा एतानि द्रव्याणि निरवयवत्वात्। शब्दार्थतर्कामृतम्, (शब्द.त. १७/५, पृ.५९)

[51]यत्र पक्षोऽसन् सिद्धसाधनं वा आश्रयासिद्धिः। यथा शशविषाणं नित्यमजन्यत्वात्। शरीरं हस्तादिमत् हस्तादिमत्तया प्रतीयमानत्वात्। (शब्द.त. १७/५, पृ.५९)

[52]पक्षे पक्षतावच्छेदकासिद्धिराश्रयासिद्धिः। यथा गगनकमलं सुरभिः कमलत्वादित्यत्र कमले पक्षे गगनीयत्वाभावः। (न्या.सि.मु.अनु., पृ.१०२)

[53]एतदुभयभिन्नसिद्धिव्याप्यत्वासिद्धिः। (न्या.सि.मु.अनु., पृ. १०५)

अतः उभयभिन्नत्वात् व्याप्यत्वासिद्धिः। कैश्चन तार्किकैः सोपाधिर्व्याप्यत्वासिद्धिः इति लक्षणमुक्तम्। यथा पर्वतो धूमवान् वह्नेः इत्यत्र यः वह्निहेतुः सः व्याप्यत्वासिद्धिः। अत्र कथं वह्निहेतुः व्याप्यत्वासिद्धिः इति जिज्ञासायामुच्यते उपाधिविशिष्टत्वादयं हेतुः व्याप्यत्वासिद्धिः। साध्यव्यापकत्वे सति साधनाऽव्यापकत्वम् उपाधित्वम्। प्रकृते आर्द्रेन्धनसंयोगः उपाधिः, अयं आर्द्रेन्धनसंयोगः साधनस्य वह्नेः व्याप्यः (यतोहि यत्र वह्निः वर्तते तत्र सर्वत्र आर्द्रेन्धनसंयोगः स्यात् इति न दृश्यते यतोहि अयोगोलके वह्नेः सद्भावेऽपि आद्रेन्धसंयोगः नास्ति) एवञ्च साध्यस्य धूमस्य व्यापकः (यत्र यत्र धूमः तत्र तत्र आद्रेन्धनसंयोगः अवश्यमेव वर्तते) अतः आद्रेन्धनसंयोगः उपाधिः, तर्हि वह्निहेतुः सोपाधिकत्वान्न धूमं साधयितुं क्षमते अतः व्याप्यत्वासिद्धः। अयञ्च असिद्धेः तृतीयभेदः साधारणसव्यभिचारेणैव गतार्थः, अतः असिद्धेः स्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात् द्वौ भेदौ सिद्धान्ततया स्वीकार्यौ[54]। पक्षे साध्यशून्यत्वं बाधः। यथा जलह्रदो वह्निमान् द्रव्यत्वात्[55]। अत्र जलह्रदः पक्षः वह्निः साध्यः द्रव्यत्वं हेतुः, किञ्च यः साध्यः वह्निः तस्य जलह्रदे अधिकरणतायाः योग्यता एव नाऽस्ति अतः पक्षे साध्यशून्यत्वात् तस्य साधनं द्रव्यत्वहेतुः बाधः[56]।

सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धिबाधितादातिरिक्त उपाधिरपि हेत्वाभासः वर्तते, तथाहि सव्यभिचाराद्यन्यतरत्वमिति हेत्वाभासत्वमिति हेत्वाभासस्य लक्षणे उपाधिरूपहेत्वाभासस्याऽपि सङ्ग्रहो भवति[57]। पुनश्च शङ्कां समुद्भावयन् ब्रवीति- न चोपाधिस्तदन्यतर इति तस्मान्नैवंभूतत्वात्। एवं सिद्धसाधनमपि न हेत्वाभासान्तरमिति[58]।

अयञ्च साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपोपाधिः त्रिविधः - **शुद्धसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति**। शुद्धसाध्यव्यापकः यथा 'पर्वतो वह्निमान् धूमादिति। अत्र आर्द्रेन्धनरूपोपाधिः शुद्धसाध्यस्य व्यापकः। अपरः 'पक्षधर्मावच्छिन्नसाध्यव्यापकः'। यथा 'काकः श्यामो मित्रातनयत्वाद्' इति। अत्र शाकपाकजत्वमुपाधिः। अयञ्चोपाधिः साध्यरूपश्यामत्वस्य अव्यापकः, अत्र श्यामत्वं तु घटेऽपि वर्तते किञ्च तत्र शाकपाकजत्वं नाऽस्ति

[54]स्वरूपासिद्धिः आश्रयासिद्धिभिन्नत्वविशिष्टासिद्धत्वं व्याप्यवृत्तित्वसिद्धत्वं यथा पर्वतो वह्निमान् धूलीपटत्वात्। अन्ये तु सोपाधिर्व्याप्यत्वासिद्धिः। यथा धूमवान् वह्नेरिति। साधारणेनैवेतस्य सिद्धत्वादयमपि भेदो व्यर्थः। तस्मादसिद्धिर्द्विविधैव। (न्या.सि.मु.अनु., पृ. १०५)

[55]पक्षे साध्यशून्यत्वं बाधः यथा जलादि पक्षे वह्न्यभावः। न्यायसिद्धान्तमुक्तावली, अनुमानखण्डे, पृ०सं० १०५। साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः। (न्या.सि.मु.अनु. ७६)

[56]शब्द.त. १७/६, पृ.५९

[57]ननूपाधिरपि हेत्वाभासान्तरमस्ति कथमेते एवेति चेत्, सव्यभिचाराद्यन्यतरत्वं हि हेत्वाभासत्वम्। (शब्द.त. १७/७, पृ.५९)

[58]शब्द.त. १७/७, पृ.५९

तथा च मित्रातनयत्वावच्छिन्नश्यामत्वहेतोः व्यापकः, यतोहि यत्र यत्र मित्रातनयत्वावच्छिन्नश्यामत्वं वर्तते तत्र तत्र शाकपाकजत्वम्। तृतीयः 'साधनावच्छिन्नसाध्यव्यापकः', यथा ध्वंसो विनाशाजन्यत्वात्। अत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं तावत्त्वम् उपाधिः[59]।

वस्तुतस्तु शुक्त्यादिषु रजतत्वप्रतीतिर्जायते किञ्च भ्रमात् रजतवदाभासमानेन तथा कार्यं सम्पादयितुं न शक्यते यथा रजतेन सह क्रियते। तथैव प्रकृतेऽपि हेतुवदाभासमानैः सव्यभिचारदिभिः तथा अनुमानं साधयितुं न शक्यते यथा हेतुना अनुमानं साध्यते। अतः सव्यभिचारादयः नानुमितिजनकाः। तथा हि हेत्वाभासशब्देन हेतोः दुष्टः धर्मः बोद्धव्यः। अयं दोषः तदेव येन अनुमितेः हेतोरसत्त्वेऽपि तत्र हेतुवत् आभासमानत्वं प्रतीयते। अत एव तार्किकैः प्रतिपादितम् अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणं निष्पद्यते।

उपाधिसिद्धसाधनयोरपि अनेन हेत्वाभासलक्षणेन आक्रान्तत्वात् तयोरपि हेत्वाभासत्वं सिद्ध्यति। एतेन यैः तार्किकैः सव्यभिचारादिपञ्चान्यतमत्वमिति हेत्वाभासस्य लक्षणमङ्गीकृत्य सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धिबाधिता इति हेत्वाभासस्य पञ्च भेदाः परिगण्यन्ते, तन्न युक्तम् उपाधिसिद्धसाधनयोः सव्यभिचारादिपञ्चान्यतमत्वे अपरिगणितत्वात्। किञ्च सव्यभिचाद्यन्यतमत्वं हेत्वाभासत्वम् इति लक्षणेन पञ्च हेत्वाभासाः भवन्ति न उपाधिसिद्धसाधनौ हेत्वाभासाविति विचारस्तु काकदन्तपरीक्षावत् व्यर्थः। यथोक्तम्- यथा साधूनेव प्रयुञ्जीत नासाधून्, एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति, हेलयो हेलयः कुर्वन्तः पराबभूवुरिति व्याकरणबोधितसाध्वसाधुशब्दोच्चारणयोः श्रुतिप्रतिपादितविधिनिषेधगुणदोषश्रवणमस्तु न तथा प्रकृते। तस्मात् काकदन्तपरीक्षावत् वृथायं विचारः[60]।

ननु काकदन्तपरीक्षावत् अयं विचारः न निष्प्रयोजनः वादीनां विजय एव प्रयोजनत्वादिति चेन्न, प्रतीतिलाघवानुभवासाधारणभाववत् अभिभूतविजयसाधकयुक्तीनामभावे वचनमात्रेण तस्याभावात्। एतेन यथा विनायकस्तवपाठः मङ्गलस्य लक्षणं वर्तते। किञ्च अमङ्गलस्य लक्षणम् उच्यमाने **'विनायकस्तवपाठव्यावृत्तत्वे सति अनुक्तविनायकस्तपाठः मङ्गलत्वं नास्ति'** इति गुरुभूतकार्यकारणभावविशिष्टं लक्षणं नोच्यते तथैव प्रकृतेऽपि लाघवे सत्यपि हेतुदोषत्वेन समेषां दोषाणां ग्रहणसद्भावेऽपि गुरुभूतं व्यभिचारान्यतमत्वं हेत्वाभासत्वमिति लक्षणं स्वीकार्यम्

[59] शब्द.त. १७/७, पृ.५९-६०
[60] शब्द.त. १७/९, पृ.६१

उपाधिसिद्धसाधनयोर्हेत्वाभासाऽभावप्रतिपादनं तु आहोपुरुषिकमात्रमेव[61]।

पुनश्च उपाधिसिद्धसाधनयोः हेत्वाभासत्वेन ग्रहणाय युक्त्यन्तरं मौनिश्रीकृष्णभट्टः प्रस्तौति यथा व्यञ्जनावृत्त्या शैत्यपावनत्वादयः सर्वानुभवसिद्धाः तथापि भवद्भिः तार्किकैः व्यञ्जनावृत्त्यन्तरमस्वीकृत्य शैत्यपावनत्वादिविशिष्टे लक्षणा एव स्वीक्रियते तथैव मयाऽपि उपाधिसिद्धसाधने अतिरिक्ततया अस्वीकृत्य हेत्वाभासत्वेनैव अङ्गीक्रियते। अन्यथा उपाधिसिद्धसाधनयोः अन्तर्गतत्वकथनमेव उच्छिद्येत। शुक्तेः अरजतत्वेऽपि भ्रमवशात् यथा रजतत्वप्रतीतिर्जायते तथैव अहेतौ अपि हेतुत्वप्रकारकभ्रमात्मकं ज्ञानं जायते। स च भ्रमः उपाध्यादिसाधारणः वर्तते परञ्च अहेतौ हेतोः भ्रमसत्त्वेऽपि अस्य भ्रमस्य के अवान्तरभेदाः स्युः इत्यादीनां विचारः तु न मम अभीष्टप्रयोजनम्[62]।

**शब्दसंक्षेपः**

१. त.भा. - तर्कभाषा
२. तत्त्व.चिन्ता. - तत्त्वचिन्तामणि
३. तत्त्व.चि.अनु. - तत्त्वचिन्तामणिः, अनुमानखण्डम्
४. न्या.सि.मु. - न्यायसिद्धान्तमुक्तावली
५. न्या.सू. - न्यायसूत्रम्
६. मा.व्या.पञ्च. - माथुरीव्याप्तिपञ्चकरहस्यम्
७. वा.भा. - वात्स्यायनभाष्यम्
८. शब्द.त. - शब्दतर्कामृतम्
९. शब्द.त.अनु. - शब्दार्थतर्कामृतम्, अनुमानप्रमाणनिरूपणम्

**सन्दर्भग्रन्थसूची**

१. तत्त्वचिन्तामणिः, गङ्गेशोपाध्यायः, सम्पा० कामाख्यानाथतर्कवागीशः, चौखम्बासंस्कृतप्रतिष्ठानम्, देहली १९९०
२. तर्कभाषा, केशवमिश्रः, हिन्दीव्याख्यासहिता, बदरीनाथशुक्लः, मोतीलालब-

[61]न च वादिविजयः प्रयोजनं, प्रतीतिलाघवानुभवासाधारणभवदभिभूतविजयसाधकयुक्तीनामभावे वचनमात्रेण तस्याभावात्। तस्माद्यथामङ्गललक्षणं विनायकस्तवपाठव्यावृत्ते सत्यनुक्तविनायकस्तवपाठस्य मङ्गलत्वन्नास्तीति गुरुभूतकार्यकारणभावं स्वीकृत्योक्तम्। तथैव लाघवे सत्यपि गुरुभूतव्यभिचारान्यतमत्वलक्षणमाश्रित्य उपाधिसिद्धसाधनयोर्हेत्वाभासत्वाभावप्रतिपादनमाहोपुरुषिकामात्रम्। (शब्द.त. १७/९, पृ.६१)

[62]यथा सर्वानुभवसिद्धापि व्यञ्जना शैत्यपावनत्वादिविशिष्टे लक्षणां स्वीकृत्य भवद्भिर्न स्वीक्रियते तथा मयाप्यनयोर्हेत्वाभासत्वं स्वीकृत्य तत्पृथक्त्वं न स्वीक्रियते। (शब्द.त. १७/१०, पृ.६१)

नारसीदासः, वाराणसी १९६८
३. तर्कसङ्ग्रहः, अन्नम्भट्टः, दीपिकानीलकण्ठीव्याख्यासहितः, सम्पा० शिवदत्तः, खमराजश्रीकृष्णदासः, मुम्बयी १९५४
४. न्यायसिद्धान्तमुक्तावली, विश्वनाथपञ्चाननः, रामरुद्रीदिनकरीसहिता, सम्पा० हरिरामशुक्लः, काशीसंस्कृतग्रन्थमाला ६, चतुर्थसंस्करणम्, चौखम्भा संस्कृत संस्थान, वाराणसी, १९८९
५. न्यायसूत्राणि, गौतमः, विनायक गणेश आपटे आनन्दाश्रमसंस्कृतग्रन्थावलिः ९१, आनन्दाश्रममुद्राणालयः १९२२
६. प्रशस्तपादभाष्यम्, प्रशस्तपादः, सम्पा. दुर्गाधरझाशर्मा, गङ्गानाथग्रन्थमाला १, द्वितीयसंस्करणम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी १९९७
७. वैशेषिकसूत्रम्, कणाद, शंकरमिश्र कृत उपस्कार, सं. ढुण्ढिराजशास्त्री, काशीसंस्कृतग्रन्थमाला, वाराणसी, १९६९
८. वात्स्यायनभाष्यम् (न्यायसूत्राणि), वात्स्यायनः, विनायक गणेश आप्टे आनन्दाश्रमसंस्कृतग्रन्थावलिः ९१, आनन्दाश्रममुद्राणालयः, १९२२
९. शब्दार्थतर्कामृतम्, मौनिश्रीकृष्णभट्टः, सम्पा० ललितकुमारत्रिपाठी, राष्ट्रियसंस्कृतसस्थानम्, गङ्गानाथझापरिसरः, इलाहाबादः, द्वि.सं २०१०



# Our Contributors

1. **Abhiraj Rajendra Mishra**
(Former Vice Chancellor,
Sampurnananda Sanskrit University, Varanasi)
Sunrise Villa, Lower Summer Hill, Shimla

2. **Aprajita Mishra**
Assistant Professor, Dept. of Sahitya,
Central Sanskrit University,
Ganganatha Jha Campus, Prayagraj

3. **Devanand Shukla**
Deputy Director (Academic),
Central Sanskrit University, New Delhi

4. **Gangadhar Panda**
Vice Chancellor,
Kolhan University, Chaibasa, Jamshedpur

5. **Govind Shukla**
Research Scholar, Dept. of Vyakarana,
Central Sanskrit University,
Bhopal Campus, Bhopal

6. **Kishornath Jha**
(Former HoD, Dept. of Philosophy,
Central Sanskrit University,
Ganganatha Jha Campus, Prayagraj)
Vill - Bittho, P.o. - Sarisopahi
Dit. Madhubani, Bihar

7. **Monali Das**
Assistant Professor, Dept. of Sahitya,
Central Sanskrit University,
Ganganatha Jha Campus, Prayagraj

8. **Peter M. Scharf**
Fellow, Indian Institue of Advanced Study, Shimla

9. **Preeti Shukla**
Project Fellow,
Samskrit Promotion Foundation, New Delhi

10. **Rajaram Shukla**
Vice Chancellor,
Sampurnananda Sanskrit University, Varanasi

11. **Ramlakhan Pandey**
HoD, Dept. of Sahitya,
Central Sanskrit University,
Lucknow Campus, Lucknow

12. **Sacchidanand Mishra**
Professor, Department of Philosophy & Religion,
Banaras Hindu University, Varanasi

13. **Vasantkumar M. Bhatt**
Former Director, School of Languages,
Gujrat Universrity, Ahmedabad

